श्रीवेङ्कटेश्वरप्राच्यग्रन्थमाला. सं १२

प्रधानसम्पादकः — परवस्तु वेङ्कटरामानुजस्वामी, एम्. ए.

श्रीमद्वैखानसे भगवच्छस्त्रे

# काश्यपज्ञानकाण्डः

( काश्यपसंहिता )

श्रीवेङ्कटेश्वरसंस्कृतपाठशालायां श्रीवैखानसभगवच्छास्त्राध्यापकै

आकुलमन्नाडुमामाभिजनैः वैयाकरणपञ्चाननाद्युपाधिसमलङ्कृतै

**पंडित रों. भ. पार्थसारथिभट्टाचार्यैः**

**संशोधितः**

**तिरुपति.**

**तिरुमल तिरुपति देवस्थानमुद्रणालये**

मुद्राप्य प्रकाशितः

१९४८

[ मूल्यम् रू. ५-०-०.

## INTRODUCTION.



The Vaikhānasas are a sect of Sri Vaiṣṇavas exclusively privileged to offer worship in temples along with the Pāñcharātras. There is a *Vaikhānasa Kalpa-sūtra* attached to the Black *Yajur Veda* and these Vaikhānasas follow that Kalpa in the performance of their Vedic and domestic rituals. From the fact that there is a *Kalpa-sūtra* attached to the Veda, we may conclude that Vaikhānasas as a sect are very old. They are referred to, moreover, as a pious and orthodox sect of the Sri Vaiṣṇavas in our ancient works on religion. Besides the *Kalpa-sūtra*, the Vaikhānasas have a large religious literature of their own, specially relating to worship in temples, the chief among which are the Saṁhitas by Marīci, Atri, Kāśyapa and Bhṛgu. The temple of Srīnivāsa at Tirumalai being a Vaikhānasa temple, the authorities took upon themselves the publication of ancient works belonging to that sect not already published elsewhere. The *Vimānārcana-Kalpa* by Marīci has been first published by the Vicharanakartha of the temple. After the Sri Venkatesvara Oriental Institute, mainly devoted to research, was started in 1939 it took over the publication of the literature and published the *Samūrtārcanādhikarana* of Atri in 1943 in the Sri Venkatesvara Oriental Series. The *Jñānakāṇḍa* of Kāśyapa is now issued.

The Editing work of the Vaikhānasa works has been entrusted to the Vaikhanasa Agama Pandit in the Sri Venkatesvara Oriental College and the first two works were accordingly edited by the late V. Raghunathachakravarti Bhattachar who was Vaikhanasa Pandit till 1943. He was

assisted by other scholars in the Institute. The present work is edited by his successer in the college, Mr. R. Parthasarathi Bhattachar of Akulamannādu. An account of the manuscripts used in the edition of the work is found in the Sanskrit Introduction by the Editor.

An Introduction in English to the Saṁhitas comprising an account of the sect, the Vaikhānasa literature, the place of the Saṁhitas in it and other related literary and historical information is in preparation and will be published shortly as a separate volume.

TIRUPATI
3rd Jan. 1948

P. V. RAMANUJASWAMI
*Director*

॥ श्रीः ॥

# ग्रन्थपरिचयः.



श्रियः कान्ताय कल्याणनिधये निधयेऽर्थिनाम् ।
श्रीवेङ्कटनिवासाय श्रीनिवासाय मङ्गलम् ॥
येन वेदार्थविज्ञेन लोकानुग्रहकाम्यया ।
प्रणीतं सूत्रमौखेयं तस्मै विखनसे नमः ॥

श्रीवैखानसभगवच्छास्त्रसंहितास्वन्यतमायाः अस्याः ज्ञानकाण्डसंहितायाः निर्माता 'कश्यपः पश्यको भवति यत्सर्वं परिपश्यतीति सौक्ष्म्यात्' इति निगमनिरुक्तनिजमहिमविशेषः तत्र भवान् काश्यपः परमर्षिरिति स च भगवतो विखनसः चतुर्षु शिष्येषु भृगुमरीच्यत्रिकाश्यपेष्वन्यतम इति च तदीयग्रन्थसन्दर्भैरवसीयते । अस्यैव महर्षेः कृत्यन्तरे सत्यकाण्डतर्ककाण्डौ ग्रन्थगणनाध्याये भगवता मरीचिना परिगणितौ साम्प्रतमस्माभिर्नोपलभ्येते । शास्त्रमेतदधिकृत्य इतरैरस्य सतीर्थ्यैः भृगुमरीच्यत्रिभिः बहुधः संहिताः प्राणायिषत ।

आसां चाप्तोपदेशमूलकत्वकथनाय शास्त्रावतारप्रकारो भगवता मरीचिना उपवर्णितः । यथा 'वैखानसं महाशास्त्रं सर्ववेदार्थसारभूतमप्रतर्क्यमनिन्दितं वैदिकैरुपसेवितं वि णोराराधनं सर्वभूतहितार्थाय शाब्दं प्रमाणमवलम्ब्य विष्णुना विखनस उक्तम् । विखनसा भृग्वादीनामुक्त'मिति (१०१ पटले) । यथा वा काश्यपेन 'तस्मादेवं विदित्वा लोकक्षयोद्भवपुण्यपापफलाधारसुखदुःखप्रवर्तनं पत्न्यपत्यधनादीनामसारतां च परिज्ञाय ऐहिकामुष्मिकज्ञानहेतुकमनश्वरमप्रमेयमनादिमध्यान्तमार्षं शाब्दं प्रमाणमवलम्ब्य तत्सारभूतं सर्वार्थसाधकं भुक्तिमुक्तिफलप्रदमप्रतर्क्यमनवद्यमघौघघ्नं वैखानसमिदं शास्त्र'मित्यादि (पुटे ३०) ।

संहितास्वेतासु प्रतिपादिता अंशाः चरितक्रियाज्ञानयोगाख्यचतुर्विधविभाजकोपाधिमन्तः सन्दृश्यन्ते । यथाह मरीचिः विमानार्चनाकल्पे 'अथातो मरीचिं मुनयः प्रणम्य चरितक्रियाज्ञानयोगेषु चतुर्षु पूजामार्गेषु चरितं भगवता

विखनसा सूत्रे विस्तरेण प्रणीतमन्यत्संक्षेपेणोक्तम् । तदुपन्यासो बहुप्रयोगक्रमेण क्रियामार्गस्त्वया प्रणीतः । भगवन्! तत्त्वज्ञानं योगं च श्रोतुमिच्छाम इत्ययाचन्त ' ( ८५ पटले ) इति ।

तत्र चरितं नाम ' गार्भैः होमैः जातकर्म चूडामौञ्जीनिबन्धनैः ।

बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते ।

स्वाध्यायेन व्रतैः होमैः त्रैविद्येनेज्यया सुतैः ।

महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः ' ( मनु. २. ८ )

इत्युक्तश्रौतस्मार्तधर्मानुष्ठानमुच्यते । क्रियेति श्रीमतो नारायणस्य दिव्यमंगलविग्रह-सपर्योच्यते । तथा श्रीभागवते

' क्रियायोगं समाचक्ष्व भवदाराधनं विभो ।

पुत्रेभ्यो भृगुमुख्येभ्यो यथाह भगवानजः ' (स्कं. ११-२७-१)

इत्यारभ्य ' एवं क्रियायोगपथैः पुमान् वैदिकतान्त्रिकैः ।

अर्चन्नुभयतः सिद्धिं मत्तो विन्दत्यभीप्सिताम् ' ( ४९ ) ।

इत्यन्तेन ग्रन्थेन विखनसा भृगुमरीच्यादिभ्यः उपदिष्टं भगवदाराधनमेव प्रपञ्चितम् । ज्ञानयोगौ प्रसिद्धौ ।

तत्र चरितं विस्तरेण श्रीवैखानसकल्पसूत्रे उक्तमिति ज्ञानापेक्षया योगा-पेक्षया च अभ्यर्हितत्वेन आसु संहितासु क्रियायोगप्रपञ्चस्यैव विस्तरेणोपन्यासः क्रियते । अभ्यर्हितत्वं चास्याभिधीयिते, ' तेष्वर्चनं सर्वार्थसाधनं स्यात् ' इत्यारभ्य ' एवं सदा ध्यातुमशक्यत्वात् प्रतिमादिषु पञ्चमूर्तिनामभेदैः समावाह्याभ्यर्चयेत् । एतत्स-मूर्तार्चनं सर्वसिद्धिप्रदत्वात् गृहे देवायतने वा समूर्तार्चनमेव कारयेत् । अन्यथा न परमं पदमवाप्नोति ' ( मरीचिः ९६ पटले ) इत्यन्वयमुखेन व्यतिरेकमुखेनापि ।

किञ्च क्रियावतो ब्रह्मविद्वरिष्ठत्वबोधनेन अस्यैव क्रियायोगस्य अभ्यर्हितत्व-ख्यापनं उपनिषत्स्वपि दृश्यते । यथा मुण्डके ' आत्मक्रीड आत्मरतिः क्रिया-

वानेष ब्रह्मविदां वरिष्ठः' (मु. ३-१-४) इति। अत्र क्रिया भगवदाराधनमेव। उपनिषदुपक्रमे तादृशक्रियायोगस्योपदेशपरम्पराप्रसङ्गे तत्प्रत्यभिज्ञापकसामग्रीलाभात्। यथा 'ब्रह्मा देवानां प्रथमः सम्बभूव विश्वस्य कर्ता भुवनस्य गोप्ता। स ब्रह्मविद्यां सर्वविद्याप्रधानामथर्वाय ज्येष्ठपुत्राय प्राह' (मुं. १-१-१) इति। अयमर्थः— 'ब्रह्मा विखनाः ज्येष्ठपुत्राय अथर्वाय भृगवे सर्वविद्याप्रधानां ब्रह्मविद्यां भगवदाराधनरूपां प्रा' हेति गुरूपदेशपरम्परा पठिता। तथा श्रुतिरियमुपबृंहिता च श्रीशास्त्रे।

'ततःपरं चतुर्वक्त्रो जटाकाषायदण्डभृत्।
नैमिशारण्यमासाद्य मुनिबृन्दनिषेवितम्।
तपस्तप्त्वा चिरं कालं ध्यायंस्तेजश्च वैष्णवम्।
पश्चादपश्यद्विष्णूक्तमागमं विस्तरात्तदा।
संक्षिप्य सारमादाय शाणोल्लिखितरत्नवत्।
धाता विखनसो नाम्ना मरीच्यादिसुतान्मुनीन्।
अबोधयदिदं शास्त्रं सार्धकोटिप्रमाणक' मिति।

(तात्पर्यचिन्तामण्युपोद्घातः)

किञ्च पूर्वोक्तश्रुतिभ्यस्त्वाराधनमेव ब्रह्मविद्येत्यपि लभ्यते। तदेवोक्तं भगवता बादरायणेन 'अपि संराधने प्रत्यक्षानुमानाभ्या' मित्याराधनस्य ब्रह्मविद्यात्वम्।

भगवदाराधनस्य यथा उत्तमब्रह्मविद्यात्वं तस्य विस्तरः भगवच्छ्रीनिवासमखिवेदान्तदेशिकैरनुगृहीतोत्तमब्रह्मविद्याग्रन्थे द्रष्टव्यः।

तादृशमाराधनं भगवद्दिव्यमङ्गलविग्रहसन्निधिमन्तरा न सेत्स्यति। यथाह भगवान्मरीचिः 'अथ भगवतः समाश्रयणं चतुर्विधं भवति। जपहुतार्चनध्यानमिति। सावित्रीपूर्वं वैष्णवीमृचमष्टाक्षरं भगवन्तं ध्यात्वाभ्यसेत्स जपः। अग्निहोत्रादिहोमो हुतम्। गृहे देवायतने वा वैदिकेन मार्गेण प्रतिमादिषु पूजयेत् तदर्चनम्। निष्कलसकलविभागं च ज्ञात्वा अष्टाङ्गयोगमार्गेण परमात्मानं जीवात्मना चिन्तयेत् तत् ध्यान' मिति। तेष्वर्चनं सर्वार्थसाधनं स्या' दिति (९६ पटले)

ततः तदर्चनप्रतियोगिदिव्यमङ्गलविग्रहस्वरूपं तत्र भगवतः सान्निध्यसङ्क्रमप्रकारः भक्तितत्पर्वविशेषाणामर्चनाङ्गत्वञ्च प्रतिपाद्यते। यथा 'सोऽव्ययः सर्वव्याप्याकाशोपमः निष्कलः परमात्मा ज्ञानेन भक्त्या च युक्तस्यान्तः सन्निहितो भवति। 'आत्मा गुहायां निहितोऽस्य जन्तोः' इति श्रुतिः। तस्माच्छक्तिमता तेन सकलं संङ्कल्प्य भक्त्या मन्त्रैश्च प्रतिष्ठापिते बिम्बे भक्तानुकम्पया सकलः तद्बिम्बे समाविष्टः देवः सन्निहितो भवेत्। अव्यक्तं शाश्वतमनादिमध्यान्तमतीन्द्रियं देवैरप्यनभिलक्ष्यं यद्वैष्णवं पदं तत्प्राप्तिफलं तदर्चन'मिति (काश्यप ८३ पु.)।

अन्यत्र च 'ब्रह्मादयोऽपि तद्रूपलक्षणनिश्चयं ज्ञातुमशक्ताः चित्तभित्तौ तद्रूपं भक्तितूलिकया सङ्कल्प्य वर्णैरावेष्ट्य आलोकयन्ति। तस्माद्भक्तिरेव कारणम्। अभीक्ष्णदर्शनयोग्यं तद्भगवद्रूपं कल्पयेदिति' (काश्यप. ७९..पु)।

अन्यत्र च 'अथातो भगवतो नारायणस्याकृतिलक्षणं व्याख्यास्यामः। यस्यास्यमग्निः द्यौर्मूर्धा खं नाभिः भूः पादं चक्षुषी अर्कनिशाकरौ दिक् श्रोत्रे ज्योतींष्याभरणानि उदधयोऽम्बरं भूतानीन्द्रियाणि अस्याकृतेः प्रमाणत्वं कल्पितं भृग्वादिभिः। तद्धेतुभिर्नावमन्तव्यममीमांस्यमाज्ञासिद्धमिति ज्ञात्वा तदुक्तविधिना कारयेत्' (काश्यप १०० पु.) इति।

'समूर्तार्चनमेव कारये'दिति पूर्वं विहितमर्थमेव व्यतिरेकमुखेन समर्थयति श्रुतिः। यथा मुण्डके 'नायमात्मा बलहीनेन लभ्यो न च प्रमादात्तपसो वाप्य लिङ्गात्' (मुं. ३ - २ - ४) इति। अलिङ्गादिति प्रतिमारहितादित्येव स्वारसिकोऽर्थः। सा च विष्णुप्रतिमेति च। यथोपबृंहितः काश्यपेन श्रुतेरस्या अर्थः। 'विष्णुपूजाविहीने देशे विप्रो न जात्वपि वसेत्' (काश्यप. १५ पु.) इति। तथा 'तस्मात सर्वप्रयत्नेन देवीभ्यां सार्धं विष्णुं भगवन्तं सुवर्णरजतताम्रादीनामन्यतमेन षडङ्गुलादहीनमुपकल्प्य यथाविभवमाराध्य तत्प्रमुखे विधानेन हुत्वैवाश्नीयात्। अन्यथा आत्मघाती भवति। विष्णुपूजाविहीनं यद्वेश्म तत्पक्वणैः समम्। तद्विप्रमुख्यैः न प्रवेश्यम्, तदधिपेन नासितव्यम्, न सम्भाष्य'मित्यादि (काश्यप १९ पु)

यथा वा 'गृहं श्मशानं तत्र बिम्बवर्जित'मित्यादि भागवतवचनम्।

तथाच ‘ मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ’। (८-५४)

‘ सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः ।

नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ’ (९-४)

इत्यादीनामर्चनाविधायकत्व एव स्वारसिकनिर्वाहसिद्धिः । भक्त्या उपासत इति भक्तियुक्तोऽर्चयेदिति ।

किञ्च ‘ प्रवः पान्तमन्धसो धियायते महे शूराय विष्णवे चार्च ’ तेति (ऋग्वेदसंहिता, मं १ सू. १५५ मं. १) श्रुतिप्रयोगरूपं ‘ अथाग्नौ नित्यहोमान्ते विष्णोर्नित्यार्चा ’ इत्यारभ्य ‘ भगवन्तं नारायणमर्चयेत्तद्विष्णोः परमं पदं गच्छ ’ तीति (४-१३)श्रीवैखानससूत्रमुपनिषत्कृत्य प्रवृत्तेऽस्मिञ्छास्त्रे प्रकृतार्चनानुबन्धिकृत्स्नप्रमेय-जातस्य व्याख्याकरणं नान्तरीयकं सम्पद्यते । ततः अर्चनार्थमर्चनीयदिव्यमङ्गल-विग्रहस्य सन्निधापने तस्य उपादानद्रव्यभेदेन निर्माणे प्रकारभेदः चित्रचित्रार्धचित्रा-भासभेदेन तन्निर्माणे प्रकारान्तरेण भेदः दिव्यमङ्गलविग्रहस्य आभिरूप्यसम्पादनाय तन्निर्माणोपयोगिदशतालादिमानकथनं तादृशविग्रहरक्षणाय देवायतनमण्डपगोपुर-प्राकारादिनिर्माणं तेषां दीर्घस्थित्युपकारकवृत्तिकल्पनं आलयाश्रयग्रामाग्रहारादि-निर्माणमित्यादयः प्रथमोपस्थिता विषया भवन्ति । अतश्च तादृशदिव्यमङ्गलविग्र-हस्य श्रीशास्त्रसिद्धं प्रतिष्ठापनं नित्यार्चनं त्रिविध उत्सवः नवविधं स्नपनं तथात्र स्खलितेषु प्रायश्चित्तमित्यादयः अनन्तरमुपस्थाप्यन्ते। अन्तरा च प्रसङ्गात् काम्य-कल्पाः अद्भुतसम्भवतच्छान्त्यादयः प्रकृता भवन्तीति उक्तविषयविभागेन संहिता व्याख्याता ।

किञ्च श्रीसूत्रे ‘ विष्णोर्नित्या ’ चेत्यत्रत्यविष्णुशब्दं विवृणुते काश्यपः । यथा ‘ अथ विश्वतश्चक्षुः विश्वतोमुखाङ्घ्रिहस्तं विश्वात्मकं विश्वगर्भं विश्ववेत्तारं विश्वेन्द्रियगुणाभासं विश्वेन्द्रियविवर्जितमनादिनिधनं व्योमाभं यद् ज्ञातृ ज्ञेयं ज्ञान-विहीनं ज्ञानघनं तदेव जाग्रत्स्वप्नसुषुप्तितुर्यावस्थानगं बहिःप्रज्ञान्तःप्रज्ञप्राज्ञावस्थं वैश्वानरतैजसहृदयाकाशरूपेण स्थूलं प्रविभक्तमानन्दं भुञ्जानं ब्रह्म तुर्यं चतुष्पाद्माम-नन्ति । तदेव ब्रह्म सत्त्वोत्कर्षनिकर्षाभ्यां प्राणिषु चतुर्धा भिद्यते सत्त्वतः पादतो-ऽर्धतः त्रिपादात्केवलात् । धर्मज्ञानैश्वर्यवैराग्यविषयाश्चतस्रो मूर्तयस्त्विमा भवन्ति ।

आसु मूर्तिषु कूटस्थः सूक्ष्ममूर्तिः सत्तामात्रः सोऽत्र परं ब्रह्म विष्णवाख्यः' (कश्यप ५२ पुटे) इति विष्णुः सर्ववेदान्तसिद्धं ब्रह्मैवेत्युक्तम् ।

स च विष्णुः श्रीसहाय एवार्चनीय इति तत्रैवोच्यते । यथा 'प्रकृतिपुरुषावुभावनादी ताभ्यां लोकप्रवर्तनम् । विकारगुणास्सर्वे प्रकृतिसमुद्भूताः कार्यकारणकर्तृत्वे हेतुः प्रकृतिः सा प्रकृतिः श्रीरिति व्याख्याता' (काश्यप ५६ पु.) इति । तथा 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वर' मिति तत्क्लेशसंश्लेषाल्लोकयात्रामूला देवी । तस्मात्तमनयैव सह देवेशमर्चयन्ति परमर्षयः। सा देवी श्रीरिति प्रोक्ता । सा प्रकृतिः सा शक्तिः । तदभिन्नाः स्त्रियः सर्वाः पुरुषास्तदभिन्नाः सर्वे । ताभ्यां स्थितिः । तस्मात्सहैवार्चये' दिति (५२).

'विष्णोर्नित्यार्चा सर्वदेवार्चा भव' तीति सूत्रम् । तत्र विहितमर्चनं साकलमेव । 'षडङ्गुलादहीनं तद्रूपं कल्पयि' त्वेत्युक्तत्वात् । उक्तं च 'मानसी होमपूजा च बेरपूजेति सा त्रिधा' इति त्रेधा 'अमूर्तं समूर्त' मिति द्वेधा चार्चनम्। समूर्तमिति विम्बार्चनमुच्यते। तथा चोक्तम् 'अर्चनं द्विविधममूर्तं समूर्तं चेति। अग्नौ हुतममूर्तं समूर्तं तद्बिम्बेर्चनम्। समूर्ते चक्षुर्मनसोः प्रीतिः सदा संस्थितिश्च' (काश्यप २ पुटे) इति ।

'भक्त्या भगवन्तं नारायणमर्चये' दिति सूत्रे भक्तेरर्चनस्य सन्निहितोपकारकत्वबोधनात् भक्तिप्रशंसा बहुशः तत्र कृता दृश्यते। यथा 'तपोभिः कर्मभिः पुण्यैर्वान्यैः नाप्नुयाद्वैष्णवं पदं भक्त्यैव निनयेन्नान्यैः। भक्तिरेव परा पुण्या भक्तिरेव शुभप्रदा । तृष्णावैतरणीयानं संवर्तकातिवृष्टिरक्षा कामहालाहलाग्न्यमृतधारा सङ्कल्पबीजहा देहबन्धमोक्षप्रदायिनी सङ्कल्पकण्टकाविद्धविशल्यकरणी योगध्यैङ्कुरवर्धनी असिक्रकचछेदरोपसञ्जीविनी दुःखलयजालभेदिनी सुखचिन्तामणिप्रदा सतॄणां भक्तिः' (काश्यप ३० पुटे) इति ।

'परमं पदं गच्छ' तीत्यस्य विवरणं च। यथा 'सर्वदेवमयस्य देवेशस्यार्चनं सर्वशान्तिकरं वेदानां वैदिकानामप्यभिबृंहणम् । एतदेवं यत्नेनापि भक्त्या यः कुर्यात् स पुत्रदारक्षेत्रमित्रस्वकुलपशुभृत्यवाहनादिसमृद्धिं सुवर्णरत्नधान्यादिसर्वसम्पदं व्याध्याद्यशुभनाशनं च लब्ध्वा अभीष्टानि सर्वाणि सुखानि इह लोके चिरमनुभूय तदव्ययं शाश्वतं देवैरप्यनभिलक्ष्यमतीन्द्रियं वैष्णवं परमं पदं गच्छति । तस्यैक-

विंशतिपितरः पूर्वजाश्च एकविंशत्यपरजाताश्च विष्णोर्लोके महीयन्ते ' (काश्यप १०१ पुटे) ' इत्यर्चकस्य सर्वोत्तरमैहिकभोगानुभवमुक्त्वा भगवत्पदप्राप्तिरप्युदिता। तथा महाप्रतिष्ठान्ते च ' समाप्ते वैष्णवयागे भोगैश्वर्यं प्रतिष्ठिते त्यक्त्वा कलेबरं सद्यः शङ्खचक्रधरः श्यामलाङ्गश्चतुर्भुजः श्रीवत्सवक्षाः भूत्वा वैनतेयभुजमारूढः सर्वदेवनमस्कृतः सर्वान् लोकानतीत्यासौ विष्णोः सायुज्यमाप्नुयात् । अन्यलोकगताः सर्वे पुनरावर्तिनः विष्णुलोकगतानां नास्त्यावृत्तिः ' (कश्यप ३० पु.) इति परमपदस्यापुनरावृत्तिलक्षणत्वं च प्रतिपादितम् ।

तथोक्तं गीतासु ' आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ।

मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ' (८-१६) इति ।

' मामुपेत्य तु कौन्तेय दुःखालयमशाश्वतम् ।

नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः' (८-१५) इति च।

' गृहे देवायतने वा ' इति सूत्रादिदमर्चनं गृहार्चनमालयार्चनमिति द्वेधा अनुष्ठीयते । गृहेषु गृहिभिः आलयेषु तदधिकारिभिश्च । तद्विस्तरस्तु व्याख्यातः।

यथा ' आत्मार्थं वा परार्थं वा गृहे देवालयेऽपि वा ।

अर्चनं वासुदेवस्य लक्षकोटिगुणं भवेत् ।

उत्कृष्टः परशब्दोऽयं परार्थो मोक्षवाचकः ।

मुमुक्षूणां मोक्षदानात् परार्थ इति कथ्यते ।

स्वार्थं गृहार्चनं प्रोक्तं परार्थं त्वालयार्चनम् ।

परार्थं स्याज्जगच्चक्षुः स्वार्थं स्यात् गृहदीपिका ' इति ।

( अर्चनानवनीते २ पुटे ).

गृहार्चनं तु चरितानुगृहीतत्वेन आलयार्चनमेवात्र संहितासु प्रपञ्च्यते।

इदं पुनरर्चनं द्वेधा त्रेधा वा विभक्तं परिदृश्यते । ' वैखानसं पाञ्चरात्र ' मित्याद्ये वैखानसं पाञ्चरात्रं भागवतमिति द्वितीये च स विभागो ज्ञेयः । यथा काश्यपीये ' वैखानसं पाञ्चरात्रमिति विधानद्वयं विष्णोस्तन्त्रम् । वैखानसं सौम्यमाग्नेयं पाञ्चरात्रम् ' ( पु. १७१ ) इति। यथा वा मरीचिसंहितायां विमानार्चनाकल्पे

'वैखानसं वैदिकं वैदिकैरर्चितमैहिकामुष्मिकफलप्रदं पाञ्चरात्रमाग्नेयमवैदिकमामुष्मिकफलप्रदम्। सौम्यं सर्वत्र सम्पूज्य' मिति (मरीचि ७७ पटले).
तथा क्रियाधिकारे भृगुः।

'वैखानसं पाञ्चरात्रं तथा भागवताभिध' मिति.

तथा श्रीभागवते

'वैदिकः तान्त्रिको मिश्र इति मे त्रिविधो मखः।
त्रयाणामीप्सितेनैव विधिना मां समर्चयेत्' (११-२७-१०)

इत्यारभ्य एवं क्रियायोगपथैः पुमान् वैदिकतान्त्रिकैः।
अर्चन्नुभयतः सिद्धिं मत्तो विन्दत्यभीप्सिता' मित्यन्तम् (४९).

'वैदिक' मित्यनेन बुभुक्षूणां मुमुक्षूणां च श्रौताग्निहोत्रफलसाधनत्वमपि वैखानसार्चनस्य निरूप्यते सूत्रकारैरेव। 'यज्ञेषु विहीनं तत्सम्पूर्णं भव' तीति (प्र.४-१३). तथा काश्यपेनापि 'अतस्तद्ग्रामवासिनां यजमानस्य राष्ट्रस्य च सामान्यमग्निहोत्र' मिति (काश्यप २५ पुटे). तथा तेनैवान्यत्र 'तस्मादालये विधिना विष्णोः नित्यार्चनमनाहिताग्नीनामग्निहोत्रसमादेतच्चाग्निहोत्रफलं ददाति। आहिताग्नीनामप्येतत्सर्वप्रायश्चित्तहेतुकं सर्वकामावाप्त्यर्थं च द्वितीयं भवति। यतो यजमानमरणेप्यालयार्चनं भूम्यामन्यैरविच्छिन्नं प्रवर्त्यते। ततः शाश्वतं तिष्ठेत्। एतन्नित्यं परमं पुण्यं भक्त्या यत्नतः कुर्यात्। ग्रामादिषु चैतद्वास्तुनिवासिनां सामान्यमग्निहोत्रं सर्वसम्पत्करमिति ब्रह्मा चाशंसत्' इति। (काश्यप २ पु.).

'वैदिकै' रिति वैखानससूत्रोक्तवैदिकसकलसंस्कारशालिभिरित्युक्तं भवति। उक्तं च वैखानसान् प्रस्तुत्य श्रीमद्वेङ्कटनाथवेदान्तदेशिकेन 'दृश्यन्ते ह्येते वंशपरम्परया वेदमधीयाना वैखानससूत्रोक्तवैदिकसकलसंस्कारशालिनः वर्णाश्रमधर्मकर्मठा भगवदेकान्ता ब्राह्मणाः' इति (न्यायपरिशुद्धौ शब्दखण्डे १ आह्निके १९६ पु. श्रीरङ्गमुद्रणे).

किञ्च वैखानसपाञ्चरात्रशास्त्रयोः प्रक्रियाभेद इव 'वैदिकैः दीक्षितैः' इति प्रतिनियताधिरिक्तत्वस्यापि सिद्धत्वात् वैदिकशब्दो दीक्षितेतरत्वमभिदधाति। एवञ्च पाञ्चरात्रशास्त्रस्यासाधारण्येन पञ्चसंस्कारदीक्षाया विहितत्वेन पाञ्चरात्रशास्त्रो-

क्तादृशदीक्षाविरहितैरित्यर्थान्तरं च 'वैदिकै' रित्यनेन सिध्यति । उक्तं च निगमान्तमहादेशिकेनान्यत्र

'त्वां पाञ्चरात्रिकनयेन पृथग्विधेन वैखानसेन च पथा नियताधिकाराः ।
संज्ञाविशेषनियमेन समर्चयन्तः प्रीत्या नयन्ति फलवन्ति दिनानि धन्याः '
इति ( शरणागतिदीपिका श्लो. ३२ ).

उक्तं च श्रीमद्भिः गोष्ठीपुराभिजनैः 'विष्णुतन्त्वविभागप्रकरणे वैखानसाद्भेदकत्वेन दीक्षायोग उक्तः । दीक्षा पञ्चसंस्काररूपापीति । अत्र ईश्वर-संहिताश्रीप्रश्नसंहितादिषु व्यक्तम् । आनन्दसंहितायाम्

'वैखानसकुले जातः पाञ्चरात्रेण दीक्षितः ।
न दीक्षितो न जातो वै स वै देवलकः स्मृतः ।
पाञ्चरात्रविधानज्ञो दीक्षाविरहितोऽर्चकः ।
कल्पदेवलक ' इति दीक्षारहितपाञ्चरात्रोक्ताराधनस्य निषेधात् श्रीनित्योक्ताराधनस्य पाञ्चरात्रमूलकत्वेनोक्तत्वात् तदर्थं पञ्चसंस्कारस्यैव सर्वैरप्यङ्गीकारात् तस्य दीक्षात्वमवश्याश्रयणीयम् । दीक्षाशब्दस्थाने

'शङ्खचक्राङ्कितभुजान् गृह्णीयादन्यसूत्रिण ' इति

शङ्खचक्राङ्कनकथनाच्च तदभावः स्पष्टमवसीयते । तापविधायकानां पञ्च-संस्कारान्तर्गततापपरत्वेन तदतिरिक्तकेवलतापविधिः तत्प्रयोगविधिरित्यादिकं नास्ति । दीक्षाशब्दस्य सङ्कोचें प्रमाणाभावः । सामान्ये पक्षपातात् । एतेषु नाविश्वसितव्यम् । बहुष्वद्यापि दर्शनात् । न्यायपरिशुद्धिश्रीपाञ्चरात्ररक्षादिषूदाहरणाच्च । एतद्विरो-धिवचनानि पूर्वापराप्रदर्शनात् कुत्राप्यनुदाहरणात सच्चरितरक्षायामधि-कारान्तरयोरिव सुदर्शनादिधारणविधानाधिकारे अनुपन्यासाच्च शङ्कास्प-दानि । सामान्यप्रवृत्तवचनानि च उत्सर्गापवादन्यायात् 'सात्त्वतं विधि ' मिति विशेषवचनदर्शनाच्च सङ्कुचितानि । वचनाभावेऽपि विशेषविषय आचार एव सच्च-रित्ररक्षोक्तन्यायेन शान्तविरोधः स्वविषयं व्यवस्थापयति । नित्यत्वमर्चनाङ्गत्वं च अधिकारिभेदप्रयोगभेदनियतमिति न हानिः । मुमुक्ष्वधिकृतानि पञ्चसंस्कारवचनानि उभयप्रधानान् वैखानसान् नाधिकुर्वते ' इति ।

अतश्च वैदिकाधिकारिण्यस्त्वेताः संहिताः भवन्ति ।

संहितानामासां विद्यास्थानेषु कुत्र वा अनुप्रवेश इति चेत् स्मृतित्वेन प्रामाण्यं निरधारि न्यायपरिशुद्धौ । यथा 'ननु च भार्गवादीनि न तावत् कल्पसूत्राणि तथाऽनभ्युपगमात् अप्रसिद्धेः अयुक्तेश्च । न स्मृत्यन्तराणि । मन्वादिष्वपाठात् तद्वत्प्रसिध्यभावाच्च । न च स्वतन्त्रतन्त्रान्तराणि । साङ्ख्ययोगादिसहपाठादर्शनात् । वैखानसानुवर्तनाच्च । तत्कतमां विधामवलम्ब्यामीषां प्रामाण्यमुच्यते ? मन्वत्रिभार्गवादिवत् नारदीयादिवच्च धर्मशास्त्रतयैव तेषामपि प्रामाण्यम् । अष्टादशपरिगणनस्योपलक्षणतायाः प्रामाणिकैरभ्युपगमात् । स्मृत्यन्तरेषु देवोत्सवादिप्रपञ्चनं नास्तीति चेत् । मा भूत् प्रपञ्चनम् । स्वरूपं तावदनुज्ञातं तत्प्रपञ्चनपराणा'मिति । (१९५ पुटे).

विशेषतश्चास्मिन् ज्ञानकाण्डे.

१.) वास्तुविधानव्याख्यावसरे 'तत्र वैष्णवं ब्राह्मं रौद्रं गारुडं भौतिकमासुरं राक्षसं पैशाचमति नवविधो देशः । तत्र रूढतरुजन्तुगन्धरसैः परीक्ष्याहरेत्' (१४ पुटे) इत्यध्यायेनोक्तं वस्तु अपूर्वमतिमनोहरमुपलभ्यते । प्रकारान्तरेण संवादस्त्वस्य चतुर्धा देशविभागः 'तोल्काप्पिय' (தொல்காப்பியம்) मिति द्रामिडलक्षणग्रन्थे दृश्यते ।

२.) आलयं निर्मित्सुः यथा स्वं रिक्थं विभजेत तत्प्रकार उपदिश्यते। 'स्वार्थं त्रिभागं कृत्वा एकं कुटुम्बभरणार्थमाहृत्य द्विभागं दत्वा तेनैव विधानेन विमानसुपक्व' ल्प्येत्यादि (३१ पु.).

३) अनाढ्यस्यापि परहस्तैः याच्ञालब्धार्थैश्च भगवन्मन्दिरनिर्माणे अनुमतिर्दीयते । यथा 'अशक्तश्चेत् स्वयं सम्पादयितुं राज्ञा आढ्यैः ग्राममुख्यैः वणिग्भिरनुलोमैश्च कारये' दिति (पुटे ३१). तथा 'पूर्वमेव सुपर्याप्तं भोगं कृत्वा बालागारे भगवन्तं प्रतिष्ठाप्यारम्भणं यत्तत्सामृतं बालागारं विना विमानमात्रमेव कृत्वा स्वार्थैः याच्ञालब्धार्थैश्च कृत्वा बेरादीन् कल्पयेदेतद्द्वारकमित्येतयोरेकमालम्ब्यारभेत' (पुटे ३२) इति । अयमेव हारकपक्षः श्रीभागवते

'मदर्चां संप्रतिष्ठाप्य मन्दिरं कारयेत् दृढम्' (स्कं ११.२७-५०) इत्यत्र

परामृश्यते । इदं च रहस्यमद्यावधि व्याख्यातृभिः न परामृष्टमिव भाति । यतोऽत्र काचन व्याख्या 'मन्दिरं कारयित्वा मदर्चां संप्रतिष्ठापये' दिति वाच्ये वैपरीत्योक्तिः मन्दिरे अवश्यार्चाप्रतिष्ठाज्ञापनाय 'भवापवर्गो भ्रमतो यथा भवे' दितिव' दिति।
(दीपिकादीपिनी टिप्पणी - क्रमसन्दर्भश्च)

४) आलयरक्षणार्थं विविधवृत्तिकल्पनप्रकारः उपदिश्यते । यथा 'तत्र बहुशः तूष्णीं कर्षयित्वा बीजानुप्त्वा पुरतस्तत्क्रममार्गेण भोगैश्वर्यवशादर्चनस्नपनोत्सव-बल्यर्थमेतावत् पुष्पगन्धानुलेपनार्थमेतावत् विष्णुपञ्चदिनपूजार्थमर्चनादक्षिणार्थ-मेतावत् शुश्रूषाकारिणामेतावत् वादिलजीविनां भक्तानामतिथीनामेतावत् शिष्या-णामध्येतॄणामेतावत् अप्सरसां गायकनर्तकवादनकानां विपञ्चीरववादिनां मर्द-लकानामेतावत् खण्डस्फुटितनिवृत्त्यर्थं नवकर्मक्रियां प्रत्युपकारिणां दानार्थमेताव-दिति निश्चित्य तं सर्वं पूर्ववत्ताम्रपत्रेऽर्पयित्वा। सीमाविनिर्णयं कृत्वा आचार्यमर्चकं वा वस्त्राङ्गुलीयककुण्डलादिभिरलङ्कृत्य तद्धस्ते सोदकं दद्यात्। एतत्सर्वेषामेव भव' तीति (पुटे ३२). अयमेव विषयः पुनर्दार्ढ्यायोपन्यस्यतेऽन्यत्र। यथा 'प्रति-ष्ठान्तप्रभृति नित्यमहीनमविच्छिन्नं समग्रं चिरकालार्चनं यथा गच्छेत्तथा दीर्घस्थिति-मविरोधात्समवेक्ष्य नानाविधभूमिभोगानत्यन्तपुष्कलान् यत्नेन भगवत्पूजनार्थं तत्पूजकानामाचार्यादीनां नित्यदक्षिणार्थं च कल्पयित्वा देवस्य परिच्छदांश्च दत्वा तथैव चिरकालं नित्यार्चनं कारयेत् । चिरकालार्चनेन अभीष्टान् सर्वान् कामान् चिरमवाप्नोति । तथा भोगम् । अज्ञानादर्थलोभाद्वा न कुर्यात् चेत् महादोषो भवेत्। देवार्थं कल्पितं हिरण्यपशुभूम्यादि सर्वमन्यद्द्रव्यं च विष्णोरिदमिति संचिन्त्य आचार्यहस्ते अर्चकहस्ते वा जलेनैव दद्यात् । तत्सर्वं विष्णोर्दत्तमेव भवेत्' (पुटे १०१) इति ।

५) विप्रेभ्यो ग्रामगृहादिदानप्रकारोपदेशो यथा 'सर्वदेवमयं तेजो वैष्णवं तद्विप्ररूप' मितीत्यारभ्य 'सुप्रसन्नान् वैष्णवान् विप्रानाहूय देववत्तानभ्यर्च्य तेभ्यो-नृपाज्ञया ग्रामादिप्रान्तानभिज्ञाप्य अनुमान्य स्थलवल्मीकाङ्घ्रिपारामतटाकह्रदन-द्युपकुल्यादिभिः सीमां विनिश्चित्य तत्र तुषाङ्गारशर्करायोमलसिकतादीन खनित्वार्प-

यित्वा करेणुनावयुत्य च विख्याप्य राज्ञः साम्राज्याब्दाश्रयनामविप्रनामादिकं ताम्रपत्रतले लिखित्वार्पयित्वा ददे ' दिति ( पुटे १९ ).

६) दत्तापहारनिन्दा यथा ' सुरविप्रक्षेत्रं गोष्पदं वापि यो हन्यात् त्रिसप्त-नरकान् घोरान् गत्वा भूयः तिरश्चां गतिसहस्रमवाप्नुयात् । तस्मात्सर्वप्रयत्नेन विषवह्निसमं राजा सुरब्राह्मणदत्तं परिहरेदिति विज्ञायते ' ( पुटे २६ ) इति ।

७) दत्तस्य नाशापहारादिषु पालने फलविशेषकथनं यथा ' यत्नादप्येतत्पा-लनमुपर्यधिकवर्धनं वा यः कुर्यात् सोऽपि प्रथमेष्टकादि सर्वकर्मफलं लभते ' ( पुटे १०१ ) इति ।

८) भगवतो विभवावतारनिमित्तोपदेशो यथा ' यदा ग्लानिः धर्मस्य परि-पालनाय नारायणाद्भगवतः प्रत्यंशरूपाणि युगे युगे प्रजातानि भवन्ति । तानि रूपाणि संस्थाप्यार्चये ' दिति ( पुटे. ५४ ).

९) महर्षेः सहजवाङ्माधुरी यथा ' इन्दिरेशस्य मन्दिरं सुन्दरं कृत्वा ' ( २९ ) ' बालकैः वालुकाकल्पितमप्यघौघध्वंसकृत् ' ( ३० ) इत्यादि ।

१०) ग्रन्थान्तरसंवादो यथा ' श्रुतिः, श्रुतयो वदन्ति, इति ब्राह्मणम्, केचित्, अन्ये, इति भृगुः, इत्यङ्गिराः, इत्यात्रेयः, इति भृग्वत्रिमरीच्यादयः, ब्रह्मवादिनो वदन्ति, ब्रह्मा चाशंसत् ' इत्यादयः सन्दृश्यन्ते । तद्विवरणन्तु ग्रन्थविस्तरभिया नात्र विलिख्यते ।

११) पिष्टपशुसाध्यः विष्णुयागोऽत्र प्रसिद्धः ( ९९ अ. ) । तथा काम्यकल्पेषु सर्वार्थसाधनः पौण्डरीककल्प उपदिष्टः ( ५-८ अ. ) । तथा श्रीमदष्टाक्षरमहामन्त्र-कल्पश्च ( १०६-१०८ अ. ).

१२) अत्रोक्तप्रकारस्यैव भगवतो नित्यार्चनस्य भगवदर्चाप्रकरणमिति नाम्ना सम्भवति स्फारः प्रचारः ।

संहितान्तराणीवेयमपि संहिता मन्त्रपाठक्रमं नानुरुन्धे । तथाऽत्र मन्त्र-प्रतीका अपि तत्र तत्र भिन्नानुपूर्वीकन्तश्च दृश्यन्ते । तद्विचारस्त्वस्माभिः मन्त्र-भाष्यमुद्रणावसरे परामृश्य निरूपयिष्यते ।

अत्रायं सङ्ग्रहः

अभ्यर्हिता ह्यारादुपकारकक्रिया सन्निपत्योपकारकक्रियात इत्यत्र न संविवादः। बहूकुरुते ह्यवधिस्थानापन्नां क्रियां संसिद्धिसम्पादकतया शास्त्रम्। तदा ह्यभ्यर्हितां क्रियामलङ्कुरुते कैमुतिकन्यायोऽपि। असति बाधके समानाधारविषयकज्ञानक्रिययोः भवत्यविनाभावः। सोऽपि दरीदृश्यते ह्यन्वयतो व्यतिरेकतश्च। अद्वारकत्वसद्वारकत्वाभ्यां हि विशेषः। स च व्यक्तीभवति चरमकाष्ठायाम्। अनुभूयते च रागहसनादिषु तथा। अतश्चरमपर्वतापन्नं ज्ञानं नान्तरा स्थास्यति क्रियायोगम्। नानैकान्तिकताऽत्र। सैव परिपूर्णशेषवृत्तिः। तथैव भाष्यकारः। अतस्तदत्रैव परिसमाप्यते। तथैवानुगृह्णाति भगवान् श्रीविखना महर्षिः। इत्थं ज्ञानस्य क्रियायोगे परिसमाप्तौ तात्पर्यादन्वर्थता ज्ञानकाण्ड इत्याख्याया इति साधारण्येन सङ्गृहीतो ग्रन्थपरिचयः विद्वद्भ्यः उपायनीक्रियते।

किञ्च 'अरायिकाणे विकटे गिरिं गच्छ सदान्वे शिरिंबिठस्य सत्त्वभिः। तेभिष्ट्वा चातयामसि' (ऋक् संहिता मं. १०. सू १५५. मं १) इत्यादिश्रुत्युपगीयमानवैभवस्य श्रीमदखिलाण्डकोटिब्रह्माण्डनायकस्य श्रियः पत्युः परब्रह्मणः परमपुरुषस्य श्रीवेङ्कटाद्रिशिखरशेखरायमाणस्य वैखानसमुनिश्रेष्ठपूजिताङ्घ्रियुगस्य श्रीश्रीनिवासस्यार्चावतारस्य आराधनादिकमिदमेव शास्त्रमनुसृत्य सदा प्रचलतीत्यतः शास्त्रस्यास्य महिमातिशयप्रकटने प्रमाणान्तरं नापेक्ष्यते। ऋगियं च महद्भिर्व्याख्यायते। यथा - वेदपुरुषः पुरुषार्थकामुकमुद्दिश्यात्र हितमुपदिशति। हे पुरुषार्थकामुक! अत्र सन्दर्भानुरोधात् त्वयीति शेषः। त्वयि अरायि रैशब्दः ऐश्वर्यवाची ऐहिकैश्वर्यरहिते आमुष्मिकैश्वर्यरहिते वा। काणे बाह्यदृष्टिशून्ये आन्तरदृष्टिशून्ये वा। विकटे विशिष्टतापत्रयशालिनि। 'सर्वपापानि वै प्राहुः कटस्तद्दाह उच्यते' इति वेङ्कटपदनिर्वचनानुरोधेन कटशब्दस्य दाहपरत्वादयमेवार्थः। सदान्वे दानवैः सहिते दानवशब्दस्य दान्व इति व्यत्ययः छान्दसः। दानवैः ऐहिकपुरुषार्थविरोधिभिः आमुष्मिकपुरुषार्थविरोधिभिर्वा सहिते सति। शिरिंबिठस्य श्रीपीठस्य श्रीनिवासस्येति यावत्। अत्र शिरिमिति बिठस्येति च व्यत्ययः छान्दसः। गिरिं वेङ्कटाचलं गच्छ। उक्तसर्वानर्थपरिहाराय गच्छेत्यर्थः। तत्र गमनमात्रेण कथं तत्परिहार इत्याशङ्कायामाह। शिरिंबिठस्य श्रीनिवासस्य सत्त्वभिः पुरुषैः सर्वोपचार-

क्रियानिरतैः पुरुषैः सदा सन्निधानवर्तिभिः परमैकान्तिभिः अन्तरङ्ग-पुरुषैरिति यावत् । शिरिं बिठस्येत्युभयत्रान्वयः । सत्त्वभिरिति व्यत्ययः छान्दसः । तेभिः तैः तथात्वेन लोकशास्त्रयोः प्रसिद्धैः तदीयैरित्यर्थः । अत्रापि व्यत्ययः छान्दसः । त्वा त्वां चातयामसि अनिष्टनिवारणं याचन्तं कारयामः । भगवतः श्रीनिवासस्य सन्निधौ तदीयैः अनिष्टनिवारणप्रार्थनां कारयितुमिच्छाम इति यावत् । 'चते, चदे, याचने' ( भ्वादि. पर. ) इति धातोः ण्यन्तात् लडुत्तमपुरुष-बहुवचनम् । 'इदन्तो म 'सीति (पाणनि ७-१-४६) इकारः छान्दसः । 'अत्रानादिसंसारप्रवाहसमापतितानिष्टनिवारणकामुकाः पुरुषाः श्रीवेङ्कटाचलं गत्वा तन्निवासरसिकस्य भगवतः श्रीनिवासस्य सन्निधौ सर्वोपचारक्रियानिरतान् सदा सन्निधानवर्तिनः परमैकान्तिनः अन्तरङ्गपुरुषान् तदीयान् भगवतः श्रीनिवासस्य सन्निधौ मदीयामनिष्टनिवारणप्रार्थनां श्रावय 'तेति प्रार्थयन्ते । ते च महाभागाः तथा तस्य भगवतः श्रीनिवासस्य सन्निधौ एकान्तसेवाद्यवसरे चापन्नानामापन्निवारण-प्रार्थनां श्रावयन्ते । स च परमदयालुर्भगवानन्तरङ्गपूरुषमुखात् तां श्रुत्वा अनिष्टनिवारणं भक्तानामनुपदमेव करोतीति सम्प्रदायः । अत्र 'त्वं वेङ्कटाचलं गत्वा भगवन्तं तदीयानाराधकमहाभागान् श्रीवैखानसान् द्वारीकृत्य अनिष्टनिवारणं या'चेति विधिर्विवक्षितः । अत्र 'अरायि काणे विकटे गिरिं गच्छेति तं विदुः, एवं वेदमयः साक्षाद्गिरीन्द्रः पन्नगाचलः ' इति भविष्यपुराणान्तर्गतश्रीवेङ्कटाचलमाहात्म्यपरभागः 'अयं मन्त्रः श्रीवेङ्कटाचलपर' इत्युपबृंहयति । 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत । विभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्य 'तीति । अतस्तन्निवासरसिकस्य भगवतः श्रीनिवासस्यार्चावतारस्य महिमानमवबोधयतीयं श्रुतिरिति स्पष्टमवसीयते ' इति । एवं च तापत्रयाभिभूतैरमृतत्वाय श्रीमहाविष्णुरेवाराध्य इत्यादि ।

अत्र श्रीमद्भिः परवस्तु वेङ्कटरामानुजस्वामिभिः मान्य डैरेक्टर् महाभागैः श्रीवैखानसवाङ्मयसामान्यविमर्शरूपा काचन समग्रसामग्रीसंवलिता कृतिः आंग्ल-भाषामयी निर्मिता अचिरादेव मुद्राप्य प्रकटीकरिष्यत इति महदिदं हर्षस्थानम् । ततो विशेषा अवसेयाः ।

यावदुपलब्धि सम्पादितेषु यथामति परामृष्टेष्वपि बहुषु मातृकाकोशेषु प्रायः सर्वत्र ग्रामालयबिम्बनिर्माणकल्पकशिल्पभागेषु विशेषतश्च शुद्धपाठसाधने

संभृतो महान् क्लेशः । कथं चिन्निर्वृत्तेऽपि मुद्रणे तत्र बाढमकृतार्थ एव अवशिष्ये इत्यनुवर्तत एव क्लेशः । तत्रोपयुक्तमातृकाकोशविवरणं चान्यत्र निरूप्यते ।

अस्य ग्रन्थस्य संस्करणे परमकृपया मातृकाकोशदानेनोपकृतवतां ग्रन्थाधिकारिणां श्रीश्रीनिवासदिव्यकोशागारद्रव्यदापनेनोपकृतवतामालयाधिकारिणां ग्रन्थपरिशोधनाय सर्वविधावकाशदानेनोपकृतवतां डैरेक्टर् महाशयानां अतिमनोहराकारेण मुद्रणकार्यनिर्वाहकाणां मुद्रणालयाधिकारिणां च अत्यन्तं भवामि कृतज्ञताभाजनम् ।

मानुषिकाज्ञानजनितानवधानजनितांश्च दोषानत्र मर्षयन्तु सहृदयाः इति च प्रार्थये ।

सर्वजिद्वत्सर
निजश्रावणशुक्लपूर्णिमा
भानुवासर

सज्जनविधेयः
पार्थसारथिः
आकुलमन्नाडुग्रामाभिजनः



| क्रमाङ्कः. | सङ्केताक्षराणि. | वस्तु तालपत्रं कागजं वा. | लिपिः. | पत्राणि पुटानि वा. | पङ्क्तयः. | परिमाणम्. | विस्तीर्णम् अध्यायाः |
|---|---|---|---|---|---|---|---|
| 1 | क | ताल | आंध्री | 219 प. | 6 | $14\frac{7}{8} \times 1\frac{1}{4}$" | 108 अ. |
| 2 | क-1 | ,, | ,, | 85 प. | 8 | $16 \times 1\frac{1}{2}$ | 108 अ. |
| 3 | ख | काग | देवना | 362 पु. | 17 | Fc $\frac{1}{2}$ | 108 अ. |
| 4 | ग | ताल | ग्रन्थ | 97 पु. | 9 | $16 \times 1\frac{5}{8}$ | 194 खण्डा |
| 5 | घ | ,, | ,, | 100 पु. | 7 | $16\frac{3}{4} \times 1\frac{1}{4}$ | 60 अ. |
| | ,, | ,, | ,, | 100 to 206 पु. | ,, | ,, | 60 to 108 अ. |
| 6 | च | काग | देवना | 250 पु. | 15 | Fc $\frac{1}{4}$ | 108 अ. |
| 7 | छ | ताल | ग्रन्थ | 103 प. | 9 | $15\frac{1}{2} \times 1\frac{1}{2}$ | 08 अ. |
| 8 | ज | काग | ,, | 477 पु. | 20 | रायल् $\frac{1}{4}$ | 108 अ. |
| 9 | झ | ताल | ,, | 115 प. | 9 | $14\frac{3}{8} \times 1\frac{1}{2}$ | 108 अ. |
| 10 | ट | काग | ,, | 143 पु. | 23 | Fc $\frac{1}{4}$ | 71 |
| 11 | ट-1 | ताल | ,, | 148 प. | 6 | $16\frac{1}{2} \times 1\frac{2}{5}$ | 91 |

अत्र परामर्शसौकर्याय पूर्वोक्तमातृकाकोशानां पाठसाम्यात् A. B. इति वर्गद्वये निवेशः तत्र, क. ख पूर्वोदितवर्गद्वयाद्भिन्नौ. तत्र A. वर्गीयाः कावेरीपरिसरेषु, B. वर्गीयाः तुण्डीरमण्डले

| अधिकारी. | अन्यदापेक्षिकम्. |
| --- | --- |
| श्रीवैखानसविद्यानिलयम् आकुलमन्नाडु. | अक्षराणि स्पष्टानि लिखितं च विशदम्। नातिशुद्धः कोशः |
| ” | ” |
| श्रीवेङ्कटेश्वरप्राच्यपुस्तकभाण्डागारः तिरुपति. | अडयार् पुस्तकभाण्डागारात् उपलब्धः.(३०-११-४३)दिने रामचन्द्रभट्टेन लिखितः। तत्रत्य मातृकासङ्केतः Shelf No. 8. E. 4. |
| विल्लिवाक्कम् - अर्चकम् श्री. रामानुजभट्टाचार्याः | अक्षराणि लेखनं च सुगमम्। नातिशुद्धः। खण्डात्मकः. |
| श्री. नरसिंह भट्टाचार्याः वळवनूर्. | भागद्वयात्मकग्रन्थः शिथिलप्रायः। अक्षराणि लिखितं च न सुगमम्। |
| श्रीवेङ्कटेश्वरप्राच्यपुस्तकभाण्डागारः तिरुपति. | मातृका चास्य - सिङ्गपेरुमाळुकोविल् श्रीवेङ्कटनरसिंहभट्टाचार्यात् श्रीमद्भिः पंडित रघुनाथचक्रवर्तिभट्टाचार्यैः सम्पादिता. |
| श्री. अर्चकं नरसिंहभट्टाचार्याः तिरुमुक्कुडल्. | २४आरभ्य ४३अन्तानि पत्राणि नष्टानि तथा ग्रन्थश्च २२ अध्यायमारभ्य [४९ पर्यन्तंलुप्तः |
| श्री. अर्चकम् तिरुवेङ्कडभट्टाचार्याः उत्तरमेरूर्. | अक्षराणि लेखनं च सुगमम् |
| ” | विशदतरं स्पष्टैरक्षरैः लिखितः |
| मीमांसाशिरोमणि श्री. टि. आर्. नारायणभट्टाचार्याः तिरुविशल्लूर्. | अधुनातनलेखनम् - अध्यायान्तगद्यादि न लभ्यते। अस्य मातृकैव ट-¹. संकेतितः |
| ... | अक्षराण्यतीवदुर्निरूपाणि नाति शुद्धः मातृकाकोशेषु सर्वेष्वपि विषमस्थलेषु प्रायः शुद्धपाठयुतः। |

क-1 घ, च कोशा A. वर्गे ख, ग, छ, ज, झ कोशाः B. वर्गे च निवेशिताः। ट-, ट, कोशौ ट कोशौः च महीशूरसंस्थानेप्रचुराः भवन्ति।

॥ श्रीः ॥

अत्र परामृष्टमातृकाकोशेषु आद्यन्तयोः धृतपाठविशेषसूचिका.



क. कोशे— 'शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥

इत्येक एव श्लोकः ग्रन्थादौ दृश्यते । तत्र तत्र पत्रेषु प्रायः शीर्षिका लिखिताः ।

क*. कोशे, आदौ -- शिष्या हि भृग्वत्रिमरीचिमुख्याः शुश्रूषया यस्य सदागमेषु ।
विशारदा वंशकरा बभूवुः तमद्य वन्दे विखनोमुनीन्द्रम् ॥
( इत्येक एव श्लोकः )

अन्ते च — श्रीहयग्रीवपरब्रह्मणे नमः, श्रीरामचन्द्रार्पणमस्तु, श्रीरामाय नमो नमः, श्रीकोदण्डरामाचार्यपाकयाजिस्वहस्तलिखितम् ।

ग. कोशे — श्रीविखनसपरब्रह्मणे नमः, रुधिरोद्गारिनामसंवत्सरे मिथुनमासे कृष्णपक्षे गुरुवासरे अष्टाविंशद्दिने दिनान्ते काश्यपग्रन्थज्ञानकाण्डं रामानुजभट्टाचार्येण लिखितं सम्पूर्णम् । श्रीमदनन्तभट्टाचार्यगुरवे नमः । श्रीमहालक्ष्म्यै नमः ।

घ. कोशे आदौ — प्रथमभागे

श्रौतस्मार्तादिकं कर्म निखिलं येन सूत्रितम् ।
तस्मै समस्तवेदार्थविदे विखनसे नमः ॥
यस्य द्विरदवक्त्राद्याः पारिषद्याः परश्शतम् ।
विघ्नं निघ्नन्ति सततं विष्वक्सेनं तमाश्रये ॥

अन्ते च द्वितीयभागे — हरिः ओम् । हयवदनपरब्रह्मणे नमः । श्रीविखनसगुरवे नमः । शुभमस्तु । हेविलम्बिवर्षं पङ्गुनिमासं २१-तेदि शनिक्किळमै ४-मणिक्कु येळुदि मुडिन्ददु । रङ्गन् इति दृश्यते । तत्र तत्राध्यायान्ते वळवनूर् रङ्गन् इत्यपि बहुशो दृश्यते । अन्त्यपत्रे सन्तानगोपालमन्त्रश्च लिखितः ।

छ.कोशे आदौ--शुक्लाम्बरधरं । यस्य द्विरदवक्त्राद्याः। विष्वक्सेनः स्मृतो रजा । श्रौतस्मार्तादिकं कर्म । श्रीनृसिंहाय परब्रह्मणे नमः। श्रीविखनसमहागुरवे नमः। शार्वरिनामसंवत्सरे उत्तरायणे वसन्तऋतौ वृषभमासे कृष्णपक्षे मूलानक्षत्रे

गुरुवासरे चतुर्थदिने काश्यपप्रोक्तज्ञानकाण्डे शताष्टमाध्यायं सम्पूर्णमाह येळुदि मुडिन्ददु । यादृशं पुस्तकं चैव तादृशं लिखितं मया । अबद्धं वा सुबद्धं वा मम दोषो न विद्यते । करकृतमपराधं क्षन्तुमर्हन्ति सन्तः । पोण्विळै कळत्तूरिलिरुक्कुम् वैखानसं आगस्त्यगोत्रं वेङ्कटशर्मदासन् स्वहस्त-लिखितम् ।

ज. पुस्तके — अन्ते आहत्य ग्रन्थसङ्ख्या ३७५० उत्तरमेरूर् विजयराघवभट्टाचार्यर् कुमारर् तिरुवेङ्कडभट्टाचार्यरुडैय काश्यपप्रोक्तं ज्ञानकाण्डं कल्याणपुरं कृष्णमाचारियाराल् येळुदप्पट्टदु ।

झ.पुस्तके—शुक्लाम्बरधरं । यस्य द्विरदवक्त्राद्याः । विष्वक्सेनस्स्मृतः । श्रौतस्मार्तादिकं । श्रीरामायनमः । श्रीवाग्देविने नमः । श्रियै नमः ।

ट. कोशे — आदौ, श्रीभूसमेतश्रीवरदराजपरब्रह्मणे नमः । श्रीमते विखनसे नमः । श्रीवैखानसीयकाश्यपसंहिता ।

मुखपत्रे च — इदं तावदवलोकयतां तत्रभवतां सविधे विज्ञापयति । अस्यतु मातृकाकोशे कुत्रापि नाम दृष्टिपथमधिजगाम । अध्यायसमाप्तिप्रतिपादकवाक्यानि च नोपलब्धानि । तथापि 'काश्यपमाश्रमेसमासीन' मित्यादिग्रन्थोपक्रमवाक्येन श्रीनिवासदीक्षितीयधृतानां 'काश्यपीये' इत्युपक्रान्तानां पूर्वसंस्कारादि-वचनजातानामसन्मातुलादैः नाच्चियार् कोविल् कृष्णभट्टाचार्यैः मुद्रित-समूर्तभगवद्यजनविधिधृतार्चनाध्याययोश्चात्रोपलम्भात् तत्र प्रकाशिताध्याय-परिसमाप्तिप्रतिपादकवाक्येन च इदं काश्यपीयं ज्ञानकाण्डमित्यवधार्य लिखितु मुपचक्रमे । परिदृश्यमाने च मातृकाकोशः वर्णस्खलनव्यत्ययादिभिरशुद्ध-प्राय आसीत् । तथापि कोशान्तरानुपलम्भात आर्षोक्तिविधिविपर्ययभिया च यथोपलब्धमेवालिखम् । यान्यत्रधनुःचिह्नान्तर्गतान्यधोरेखाङ्कितानि चात्र पार्श्वतः प्रदर्शितानि तानि सन्दिग्धान्यक्षराणीति सुधियोविदाङ्कुर्वन्तु । अन्येयेलेखनप्रमादजाः दोषाः अस्मदीयाः तानपि मर्षयन्त्विति च । विद्वज्जनविधेयः पूर्वमीमांसाधीती नारायणभट्टाचार्यः एस्. एस्. कालेज् मैसूर् ।

# पञ्चश्लोकी

नाहर्न क्षणदा न खं न धरणिः न ध्वान्तमासीद्यदा
    न ज्योतिः न च वस्तु लभ्यमपरं श्रोत्रादिबुध्द्या यदा ।
यन्निर्विक्रियमच्छमक्षरमनन्याधीनमेकाकृति
    स्वैरं सत्रिगुणं सपूरुषमभूद्वैखानसाख्यं महः ॥ १ ॥

संज्ञामूर्तिसिसृक्षया स्वविहितस्वानुप्रविष्टात्मक-
    स्वस्वध्यापितवेदजातधनिना येनार्थवान् श्रीपतिः ।
निर्माता सपरिच्छदत्रिजगतामाम्नायवक्त्रः स्वराट्
    आस्तेऽसौ विखना मुनिः नियमितः स्फाराधिराज्ये पितुः ॥ २ ॥

औत्सुक्यादवधार्य मूर्धनि निजे मालामिवाज्ञां गुरोः
    अभ्यार्चीदवतीर्य नैमिशवने यः शास्त्रसिद्धाध्वना ।
वेदानां व्यसनादिव स्वविहिते प्राचीनतां शिक्षितुं
    सूत्रे वक्त्रविपर्ययान्मुनिवरो देद्योत्ति वैखानसः ॥ ३ ॥

यो भृग्वत्रिमरीचिकाश्यपमुखां शास्त्रप्रतिष्ठापिकां
    लक्ष्यीकृत्य परम्परामचकथत् लक्ष्मीशपूजाविधिम् ।
प्राणैषीच्च हरेः समूर्तयजनव्याख्यानगर्भाः कृतीः
    निर्वाणैकनिकेतनं विजयते योगी स वैखानसः ॥ ४ ॥

सिद्धान्तान्तरनाटकैः सदसदाकल्पावबद्धैः मुहुः
    तत्त्वे बाढमुपप्लुते जगति तत् सन्धुक्षयन् योऽध्ययीत् ।
तस्याचार्यवराध्वरीन्द्रनृहरिश्रीवासमुख्यात्मना
    वैभाजित्रमुपास्महे विखनसो वाल्लभ्यनिघ्नं विभोः ॥ ५ ॥

---

पार्थसारथिः

॥ श्रीः ॥

# काश्यपसंहिताविषयसूचिका.

सप्तदशोऽध्याये.



अष्टादशोऽध्याये.



एकोनविंशोऽध्याये.



विंशोऽध्याये.



एकविंशोऽध्याये.



द्वाविंशोऽध्याये.

॥ ॐ ॥



श्रीः

॥ ओं नमो वेङ्कटेशाय ॥

श्रीमते विखनसे नमः

## ॥ श्रीवैखानसे भगवच्छास्त्रे काश्यपीये ज्ञानकाण्डः ॥

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥
विष्वक्सेनः स्मृतो राजा भगवान् शुद्धकर्मणः ।
तस्मान्नान्यमुपासीत कर्मणां विघ्नशान्तये ॥
श्रौतस्मार्तादिकं कर्म निखिलं येन सूत्रितम् ।
तस्मै समस्तवेदार्थविदे विखनसे नमः ॥

[1]शिष्या हि भृग्वत्रिमरीचिमुख्याः
शुश्रूषया यस्य सदागमेषु ।
विशारदा वंशकरा बभूवुः
तमद्य वन्दे विखनोमुनीन्द्रम् ॥

## ॥ प्रथमोऽध्यायः ॥

ऋषिप्रश्नोत्तरम्

हरिः ओम् ॥ [2]काश्यपमाश्रमे समासीनं सर्ववेदवेत्तारं सर्वशास्त्रार्थतत्त्वज्ञमृषिं [3]सुप्रसन्नमभिगम्य भगवन् केन विधानेन कैर्मन्त्रैः कं देवमर्चयन्तः परमं पदं गच्छेयुरिति सर्वभूतहिते रताः मुनयोऽपृच्छन् । स तेभ्यः प्राह श्रुत्यनुकूलविधिना वैदिकैर्मन्त्रैः देवेशं विष्णुमर्चयन्तः[4] तद्विष्णोः परमं पदं गच्छेयुः ।

1. क–पुस्तकेऽधिकं 2. क–कश्यपं. 3. ग–प्रसन्नं. 4. ग–अभ्यर्चयन्तः ख–अर्चयन्ति· म–येर्चयन्ति.

पद्मकोशप्रतीकाशे महति विश्वस्यायतने [1]हृदये विज्वलद्वैश्वानरशिखामध्यस्थं परमात्मानं नारायणं तमेव परं ज्योतिरक्षरं ब्रह्मेति ब्रह्मविदो विदुः । सोयं प्रकृतिस्थस्सन्[2]स्वप्नाद्यगोचरोऽपि भूतं भवद्भव्यं चेदं भवति । "पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यं" इति श्रुतिः । [3]त्रयीमयोऽयं स्वाध्यायैः श्रौतैः कर्मभिः तपोभिः तोष्यते स यज्ञेशो [4]यज्ञेनेड्यते ।

ब्रह्मस्वरूपम्

तस्मादालये विधिना विष्णोर्नित्यार्चनमनाहिताग्नीना[5]मग्निहोत्रस[6]मादेतच्चाग्निहोत्रफलं ददाति । आहिताग्नीनामप्येतत् सर्वप्रायश्चित्तहेतुकं सर्वकामावाप्त्यर्थं च द्वितीयं भवति । यतो यजमानमरणेप्यालयार्चनं भूम्यामन्यैरविच्छिन्नं प्रवर्त्यते । ततः शाश्वतं तिष्ठेत् । एतन्नित्यं परमं पुण्यं भक्त्या यत्नतः कुर्यात्[7] । ग्रामादिषु चैतद्वास्तुनिवासिनां सर्वेषां सामान्यमग्निहोत्रं[8] सर्वसंपत्करमिति ब्रह्माचाशंसत् । तद्विष्णोरेवोत्पत्तित्राणलयानवाप्नुवन्तो[9]ः देवाश्च तमेवार्चयन्ति । तस्मिन् देवेशेऽर्चिते देवास्सर्वेऽप्यर्चिता भवन्ति ।

अर्चन फलम्

"अग्निर्वै देवानामवमो विष्णुः परमस्तदन्तरेण सर्वा अन्या देवताः" इति ब्राह्मणम् । तस्मादग्नौ नित्यं हुत्वा नारायणमेवार्चयेदिति [10]ऋषिणा वैखानसे सूत्रे[11] संक्षेपेणोक्तं तदुपन्यासं[12] समन्त्रकं [13]बहुप्रयोगं क्रमेण विस्तरतोवक्ष्यामि तस्मादेतस्मिन् यत्र यत्र होमो विधीयते तत्र सर्वत्राग्न्याधारः[14] स्विष्टकृत्प्रभृत्यन्तहोमश्च तद्वैखानससूत्रोक्तविधानेनैव कर्तव्यः । तथैव तद्विधानेन निषेकादिसंस्कारैस्संस्कृतान् विप्रानाचार्यस्थापकादीनृत्विजोऽर्चकांश्च[15] वरयेत् ।

विष्णुपारम्यम्

द्विविधं तदर्चनमाख्यातममूर्तं समूर्तं चेति । [16]तदित्थमग्नौ हुतममूर्तं समूर्तं तद्बिम्बेऽर्चनम्[17] । समूर्ते चक्षुर्मनसोः प्रीतिः सदा संस्मृतिश्च[18] । ताभ्यां भक्तिश्रद्धे स्याताम् । श्रद्धाभक्तियुतस्यैव सर्वसंसिद्धिः ।

अर्चनस्य द्वैविद्ध्यम्

1. ख. च—हृदयोज्वलत्. म—हृदये...मध्यस्थः परमात्मानारायणः 2. च—स्वप्नाधियां च गोचरोऽपि. 3. घ—स्मृतिमयः 4. कादन्येयज्ञैश्चेडयते 5. क—विप्राणामित्यधिकं 6. म—अग्निहोत्रं यस्मात्. ज—लुप्यते वाक्यमिदं. 7. म—अनेनवास्तवज्ञालयेष्वप्यर्चनंकारयेत् 8. क—भवतीत्यधिकं.घ 9—देवताश्च. 10. कादन्ये इति त्रियमिणा 11. म—तस्यार्चनम् 12. क—तदुपन्यस्य. 13. क—सह. 14. घ—आघारादीत्येव. म—आज्याघार.. 15. म—यजमान इत्यधिकं 16. कादन्ये तदर्थ 17. म—पूजनम्. 18. म—संस्थितिश्च.

आलये समूर्तार्चनं बल्युत्सवाद्युपचारयोगात्संपूर्णम् । यजमानाभावेप्यविच्छेदान्नित्यं च । एतदैहिकामुष्मिकभुक्तिमुक्तिफलप्रदं सार्वकालिकं शान्तिकपौष्टिकभेदेन द्विविधं भवति । सर्वशान्त्यर्थं शान्तिकं सर्वपुष्ट्यर्थं पौष्टिकम् । [1]इत्येतदनुष्ठानक्रमं सर्वं समाहिता मुनयः शृण्वन्त्विति **काश्यपः** ॥ समूर्तार्चनप्रशंसा

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे

प्रथमोऽध्यायः ॥

## ॥ अथ द्वितीयोऽध्यायः ॥

अथ [2]शान्तिकानि व्याख्यास्यामः । इमे लोकाः फलानां [3]साधनानि ततः परेष्वेव फलावाप्तिः । तस्मादमुष्मिन् लोके शुद्धे देशे मनोरमे कर्मारभेत् । जम्बूशाककुशक्रौञ्चशाल्मलिगोमेदपुष्करा इति सप्त द्वीपाः मेदिन्याः । क्षारक्षीरघृतदधिमध्विक्षुरसशीतोदधय इत्येते यथाक्रमेणद्वीपान्तरे सप्तोदधय इति । भूर्भुवस्सुवर्महर्जनस्तपस्सत्यलोका इति यथाक्रमेणैकैकस्योपरि लोका भवन्ति । भूमेरधस्ता[4]दतलवितलप्रतलधातकविद्रावकसंफुल्लाङ्गमहातला इत्येते पातालाः । ततः परमव्यक्तं तस्मिन्नव्यक्ते प्रवालाभस्त्रिलोचनो [5]जगदाधारो निरायुधः शुकपिञ्छाम्बरधरः केयूरहारप्रलम्बयज्ञोपवीती श्रीवत्साङ्कश्चतुर्भुजो ब्राह्मेणासनेनासीनो नित्यमनाद्यमक्षररूपमचिन्त्यं कूटस्थं यत्परं तज्जिज्ञासया ध्यानयुक्तः कपिलो वसतीति तत्त्वदर्शिनो वदन्ति । दक्षिणोत्तरतः पूर्वपश्चिमतश्चाशीतिसहस्रकोटियोजनो जम्बूद्वीपः द्वात्रिंशत्कोटियोजनपृथिव्या घनविस्तारसमावृता भूमिः क्षारसमुद्रेण द्वीपाद्द्वीपाद्द्विगुणितं बाह्याद्बाह्यं समुद्राच्च समुद्रं [6]शीतोदधितश्च बाह्यमप्येवं लोकाल्लोकान्तरं तावत्प्रमाणं विवरं सर्वतः परिवृतमित्येतदेकमण्डम् । अन्यान्यनेककोट्यण्डानीति वदन्ति । जम्बूद्वीपे .भारतहैमवतनैषधमेरुदैववैडूर्यश्वेतशृङ्गगान्धर्ववर्षाश्चेति दक्षिणा-

शान्तिकविधानम् — द्वीपविभागः — सप्तोर्ध्वलोकाः — सप्तपातालाः — कपिलावासः — जम्बूद्वीपः — जम्बूद्वीपखण्डाः

1. एतत्सर्वं सममूहित्वा मुनयः कुर्वन्तीति. 2. क–भुवनखण्डविधिं. 3. कादन्ये साधतिथः परेष्वेव. 4. क-अतलवितलसुतलवितलरसातलमहातला इति. 5. A-जटाधरः 6. च–शीतोदं तद्बाह्यं.

सीमापर्वताः

दुत्तरान्तं नव खण्डा भवन्ति । हिमवद्धेमनिषधनीलश्वेतशृङ्गाश्चेति षडेते सीमापर्वताः [1]पूर्वापरजलाशयौ विगाह्य प्रतिष्ठिताः । हिमाद्रेर्दक्षिणमा समुद्रान्तं भारतम् । हिमवद्धेमयोर्मध्ये हैमवतम् । निषधाद्धेमकूटान्तं नैषधम् । नीलनिषधयोर्मध्ये मेरुः । तत्प्राक् पश्चिमसमुद्राद्दैववैडूर्ये । श्वेतनीलयोर्मध्ये श्वेतः । श्वेतशतशृङ्गयोर्मध्ये शृङ्गः । शृङ्गादा समुद्राद्गान्धर्वखण्ड इति । शाके विंशतिः कुशे [2]त्रिंशत् क्रौञ्चशाल्मल्योः पञ्चाशत गोमेदे सप्ततिः पुष्करे नवतिः वर्षमिति विज्ञायते ॥

भारतवर्षः

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे भुवनखण्डविधिर्नाम द्वितीयोऽध्यायः ॥



## ॥ अथ तृतीयोऽध्यायः ॥

दर्दुरबर्बरमालवसिंहलशृङ्गिकदेशाश्चेत्येते भारतवर्षे पैशाचदेशाः । ते विप्रैर्न वस्तव्याः । सालमुद्दंधिकनैधायककुचुमारा इत्येते हैमवते । घाटहारहाटकमुस्तोर्वर्य इत्येते नैषधे । * * भानुकापहास्यौ दैविके । शाकुण्डवादुकमल्पदाक्षिणक(?) [3]नीलाश्चेत्येते वैदूर्ये । साकुन्धारुणकपोतपिञ्जालभागशातनभूतवासजेलायकवानगोलकवरिष्ठपञ्चभूमिकावासरक्षोहाश्चेत्येते श्वेते । [4]तैष्यप्रमर्दलंभोमत्तस्त्रीवासाश्चेत्येते शृङ्गे । शाण्डिल्यधुंधुमारकापोतबडबामुखा इत्येते गान्धर्वे न वस्तव्याविषया भवन्ति । शाके काकणिकं कुशे पद्मापहारितं क्रौञ्चे मुखतुलक शाण्डिल्यकैटभस्फोटामुखाः शाल्मले कासीसवैराग्यौ गोमेदे काकावासभुजावासौ पुष्करे दारुण(?) इत्येते विप्रैर्न वस्तव्या देशा भवन्तीति विज्ञायते ॥

भारतादिवर्षेषु पैशाच देशाः

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे विप्रवासानर्हदेशनिरूपणं नाम तृतीयोऽध्यायः ॥



## ॥ अथ चतुर्थोऽध्यायः ॥

अथातः शान्तिकम् भूमौ रम्यं सुभिक्षं साम्राज्यं धर्मपुण्यजयान्वितं[5] साध्वाचारनृ-

1. छ–पूर्वापरार्धमकुटान्तं, 2. छ–सत्रिंशत्, * * मेरुप्रस्तावो न दृश्यते
3. B–नीलाश्च, 4. ख–नैष्य· 5. दयान्वितं

भूयिष्ठं वैष्णवैस्सङ्कीर्णं वेदध्वनियुतं कृष्णमृगकपोतशुकशारिका- शान्तिक-लक्षणम्
मयूरहंसचक्रवाकैः मुख्यपक्षिभिः मुनि[1]वरैरप्याकीर्णं कुशदर्भपला-
शापामार्गतुलसीयुतं पुण्यनदीपर्वतयुतं क्षेत्रं प्रागानतं सुगन्धं शङ्खगोक्षीरकुमुदाभम
शर्करमपाषाणं सुदर्शनम[2]क्षारमकर्दमं स्रोतसा परिवृतं दूर्वापामार्गधातकीचिरमालिका-
सोमवकुलकदली[3]कपित्थाश्वकर्णीविष्णुक्रान्ताशोकतिमिशचन्दनागरुकोष्ठूशीरलालवङ्ग-
कर्णिकारनीपार्जुनासनबिल्वमातुलुङ्गाश्च[4] गुणावरसोमरा(?)वल्लीप्रकुड्यपताकाद्यैः पुंवृक्षैः
परिवृतमिति[5] ।

विमानं नलिनकस्वस्तिक[6]पद्मकपर्वताकृतिसर्वतोभद्रपञ्चवासन्तिकसोमच्छन्द-नन्द्यावर्तश्रीप्रतिष्ठितचतुस्स्फुटादि प्राग्द्वारं शैलं द्वादशावरणयुतं [7]विमानम्। शैलजं ध्रुवं बेरं शङ्खगोक्षीरकुमुदाभं कौतुकं रत्नहाटककृतं पुष्पं सौवर्णं नन्द्यावर्ततुलस्यादिचतुर्वर्णयुतं गन्धं चन्दनागरुकोष्ठकुङ्कुमं धूपं चन्दनागरुकर्पूरगुलमध्वाज्ययुतं दीपं कर्पूरयुतं कनिष्ठाग्रपरीणाहपिचुवर्तियुक्तं द्वादशाङ्गुलोच्छ्रयमर्घ्यं सिद्धार्थककुशाग्रतिलतण्डुल-दधिक्षीराम्बुक्षतयुतं वस्त्रमूर्णं [8]पञ्चवर्णयुतमंशुकपट्टनिर्मितं हव्यं पायसकृसरगौल्ययावकं जलं नादेयं वस्त्रोत्पूतं मुखवासं क्रमुकतांबूलैलालवङ्गतक्कोलकर्पूरयुतमाभरणं वज्र-वैडूर्यमणिमुक्ताप्रवालमरकतादिभिरलङ्कृतं समिद्बिल्वपलाशाश्वत्थोदुम्बरदूर्वाः होमद्रव्यं तिलसर्षपस्नेहयुतं घृतं गव्यमग्निः पौण्डरीको मन्त्रमृग्यजुस्साम्नां पुटमन्त्रास्तत्र पुंलिङ्गाः स्वाहान्ताः स्त्रियो नमस्कारान्ताः नपुंसकाः शेषा इत्येतच्छान्तिकमिति ॥

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे शान्तिकादिविमानभेदविधिर्नाम [9]चतुर्थोऽध्यायः ॥



## ॥ अथ पञ्चमोऽध्यायः ॥

[10]नारायणध्यानयोगेन सर्वसिसृक्षुर्ब्रह्मा भगवन्तं ध्यात्वाऽऽसीनः [11]सहस्राब्दे-

---

1. मुनिगणैः 2. छ–क्षारकर्दमं. ज. झ–अक्षारकर्दमं, 3. दलिढाखुकर्णी 4. घ–मातुलिङ्गगाश्च. छ–भातुलिङ्गगंगाश्च म-टङ्काल. 5. छ–शान्तिकं क्षेत्रमिति. ग–इति...चतुर्थः खण्डः Colophon. 6. छ–महापद्म. 7. विमानं शैलजं ध्रुवं बेरमिति कादन्यत्रनदृश्यते 8. B–पञ्चवर्णमिति नास्ति. 9. ग–पुस्तके पञ्चमः खण्डः. 10. छ–नारायणनियोगेन. घ–निलयेन. 11. B–अष्टसहस्र.

पौण्डरीक-प्रशंसा

ऽतीते हृत्पुण्डरीकं त्रिवेदिसहितं पद्माकृत्येकं व्यक्ती[1]भूतं पर्याप्तं दृष्ट्वा आनम्य स मुदा विरिञ्चोऽर्चयित्वा तस्याग्नेर्मध्ये वेदानृषीन् पितॄन् भूतादीनसृजत् । प्राच्यामाहवनीयं दक्षिणेऽन्वाहार्यं प्रतीच्यां गार्हपत्यमुदीच्यामावसथ्यं मध्ये सभ्यमजनयत् । पश्चात्स्वयं भूर्भुवस्सु[2]वर्महर्जनर्लोकेषु गार्हपत्यान्वाहार्याहवनीयावसथ्यसभ्यांश्च यथाक्रमेण प्रतिष्ठापयित्वा पश्चात् मुखबाहूरुपादतो ब्राह्मणक्षत्रियविट्छूद्रान् क्रमेणासृजत् । तेषामाश्रमिणां ब्रह्मचारिणामेकोऽग्निः गृहस्थानां [3] त्रेताग्निः वानप्रस्थानां पञ्चाग्निरिति कल्पयित्वा पौण्डरीकाग्निं स्वयं सङ्गृह्य जपहोमस्वाध्यायादिभिर्यत्परं[4] तज्जिज्ञासयाऽभ्यर्चयत् ।

एवं प्रवृत्ते काले कदाचिदृषयो ब्रह्मलोके भगवन्तमभ्यर्च्य ध्यानेन नियतमानसं पद्मासने सुखासीनं देवं पितामहं दृष्ट्वा आनम्य प्रमुखे मरीच्यत्रिभृग्वादयोऽब्रुवन् । "भगवन् कमर्चयसि कैर्मन्त्रैः केनाग्निना जुहोषि(?) तत्सर्वं श्रोतुमिच्छाम" इत्ययाचन्त । [5]स्नेहार्द्रमानसस्तान् "पृथक्पृथग्वक्ष्यामि युष्माभिश्चोदितं सर्वं शृणुध्वमृषिसत्तमाः भगवन्तं विष्णुमर्चयामि चतुर्वेदमन्त्रैः [6]वैदिकेन विधानेन पौण्डरीकाग्निं जुहो"मीति । एवमुक्ते ते सर्वे विस्मयोत्फुल्ललोचनाः "त्वया देव कथितमग्निमच्युतपूजार्थं दत्वाऽस्मास्वनुग्रहं कु"र्वित्यवोचन् । तच्छ्रुत्वा पितामहः "सर्वतश्शान्तिकरं सर्वकामप्रदं पारमात्मिकं सर्ववेदमयमग्निं विष्णुपूजार्थं मुक्तिदं देवैरप्राप्यं गृह्णीते"त्युक्त्वा तेभ्योऽदात् । तस्मादस्मिन्नग्नौ यद्यत्क्रियते तस्मादमोघं चैव भवति । आभिचारिकवश्यादिप्रतिषिद्धम् । स्मरणमात्रेणैवापगतपापो भवति किं पुनर्जपैर्होमैः! दुष्प्राप्यः पारमात्मिकोऽयमग्निः । तस्मादब्जाग्निः सम्यग्योग्यैरेव सेवितव्यः ।

तस्मादग्निं प्रदक्षिणं कृत्वा विश्वमन्त्रेण प्रदक्षिणं प्रणामं च करोति यस्सोऽश्वमेधफलं प्राप्य विष्णुलोके महीयते । नित्यं स्वहृदि श्वेतवर्णं त्रिवेदिभिरलङ्कृतं अष्टसहस्रदलयुतमिलाकृतिं ध्यात्वा तन्मध्ये सहस्रज्वालायुतमाग्नेयमण्डलं तन्मध्ये प्रणवं नित्यं प्रातः कालेऽभ्यस्य विधूतपापसङ्घातो विष्णुलोकं स गच्छति । प्रयाणकालेप्येवं स्मृत्वा शङ्खचक्रगदाधरः श्यामलाङ्गश्चतुर्भुजो भूत्वा द्विजेन्द्रमारुह्य नमस्कृतः स्तूयमानः सुरगणैः सर्वान् लोकानतिक्रम्य विष्णुलोकं स गच्छति ।

---

1. भूतवराहं 2. B—स्वर्महः. 3. घ. च—पञ्चाग्निर्वा 4. ख—धर्मपरं.
5. B—सस्मितं कृत्वा इत्यधिकं. 6. क—कोशे नास्ति. ख. घ—ध्यानेन.

पूर्ववद्ध्यात्वा वारुणं मण्डलं तन्मध्ये श्वेताब्जं सहस्रदलयुतं तन्मध्ये [1]चन्द्रबीजमादिषष्ठं सानुस्वारं प्रणवोभयसंपुटितं ध्यात्वा नित्यं सायंप्रातः योऽभ्यस्यति [2]संवत्सरमात्राद् बृहस्पतिसमो भवति । य इदं पर्वणि पर्वणि स्वाध्यायं करोति ब्रह्मलोकं स गच्छति ॥

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे अग्न्युत्पत्तिविधिर्नाम [3]पञ्चमोऽध्यायः ॥



## ॥ अथ षष्ठोऽध्यायः ॥

शुद्धे देशे गोमयेनोपलिप्य तत्र शुद्धाभिः सिकताभिरष्टादशाङ्गुलैः समीकृत्य ऊर्ध्ववेदिविस्तारं भागोन्नतं द्विगोलकं मध्येनिम्नं वस्वङ्गुलं मध्यलेखाविस्तारोत्सेधौ भाग इति । अधोलेखाविस्तारः षडङ्गुलमुत्सेधो वेदाङ्गुल[4]मष्टपत्रयुतं कृत्वा आघारं हुत्वा बहुपुष्पैः कपिलाघृताक्तैः पुरुषसूक्तेन लक्षहोमं जुहोति यः सोऽन्ते कलेबरं त्यक्त्वा परमं पदं गच्छति । (पौण्डरीकविधानम्) ब्रह्मवर्चसकामः अधो वेद्यां धृतिदलयुतं कुण्डं कृत्वा पलाशपुष्पैः विष्णुसूक्तेन द्वादशसहस्रं जुहोति । (कामनाभेदेन-विधिः) आयुष्कामः अशीतिदलयुतं कुण्डं कृत्वा समिद्भिः वैष्णवं रात्रिसूक्तं च जप्त्वा तिलक्षहोमं जुहोति । स परमायुर्भवति । सहस्रायुः परमायुरित्युपदिशन्ति । विंशतिलक्षैः ब्रह्मायुर्भवति । लक्षायुर्ब्रह्मायुरिति वदन्ति[5] । प्रजाकामस्सपत्नीको द्विरात्रमुपोष्य प्रभाते स्नात्वा शुद्धे देशे यज्ञवाटं कृत्वा मृष्टसिक्तोपलेपनाद्यैः संशोध्य यज्ञवाटं प्रविश्य (प्रजाकामस्य-विधिः) पञ्चाग्नीन् कल्पयित्वा सभ्यात्प्राच्यां विंशतिदलयुतं पौण्डरीकाग्निकुण्डं[6] कृत्वा पूर्ववदाघारं कृत्वा कुण्डात्प्राच्यां विष्णुं पुरुषं सत्यमच्युतमनिरुद्धमिति पृथक्पृथक् यथाक्रमेण सप्तविंशतिविग्रहैरभ्यर्च्य पौण्डरीकाग्नेः प्राच्यां शालिभिः व्रीहिभिर्वा देवेशस्य विष्णोः पीठं तस्य दक्षिणोत्तरयोः ब्रह्मेशौ चोद्दिश्य पीठे च कृत्वा अग्नेरुत्तरतो दण्डवेदिं पञ्चाङ्गुलिविस्तृतामरत्निमात्रायतां कृत्वा सप्तर्षीनभ्यर्च्य

1. आदिबीजम् 2. संवत्सरं स्मृत्वा. 3. ग–षष्ठः खण्डः 4. B–सहस्र. 5. ग–सप्तमः खण्डः. 6. B-कुण्डमिति लुप्यते.

दक्षिणतो द्वादशादित्यानेकादशरुद्रान्वसूनश्विनौ [1]पाद्याद्यर्घ्यान्तमभ्यर्च्य विष्णुपीठे पद्मं संस्थाप्य तन्मध्ये रत्नं हाटकं वा संस्थाप्य तिलसर्षपगन्धाक्षतलाजकुसुमैरवकीर्य श्रीवत्साङ्कं सहस्राक्षं जगद्बीजं विष्णुं नारायणं जिष्णुं श्रीपतिं पुण्यमित्यष्टभिर्मन्त्रैः भगवन्तं सप्तविंशतिविग्रहैरभ्यर्च्य दक्षिणे श्रियं वामे हरिणीमित्यभ्यर्च्य[2] ब्रह्मेश्वरौ च सप्तविंशतिभेदैर्देवीयुक्तावभ्यर्च्य प्राच्यां [3]मध्ये वक्रतुण्डं वामे सरस्वतीं दक्षिणभागे[4] वामे रौद्रीमर्घ्यान्तमभ्यर्च्य [5]पत्नीसहितः पञ्चगव्यैः [6]स्नात्वा नववस्त्रादिभिरलङ्कृतः अग्नेर्दक्षिणतः पत्नीसहितो यजमानः पुण्याहं वाचयित्वा "विश्वा उत त्व"येत्यग्निं प्रदक्षिणं कृत्वा "अघोरचक्षु" रित्यासनं च कृत्वा "मयि गृह्णा" मीत्यभिवन्द्याग्नि "मदितेनुमन्य"स्वेत्यादिना वेदिं परिमृज्य अग्नीषोमीयं बार्हस्पत्यं [7]वैष्णवं जुहोति [8]पद्माग्नौ। आहवनीये सारस्वतमन्वाहार्ये वैष्णवं गार्हपत्ये सौरमावसथ्ये वैश्वदेवं सभ्ये सप्तर्षिदैवत्यं वैष्णवं हुत्वा श्वेताब्जं घृताप्लुतं प्राजापत्येन पौण्डरीकाग्नौ दशसहस्रं प्रजार्थी जुहोति। पश्चात् [9]स्थालीपाकवच्चरुं श्रपयित्वा सङ्गृह्य "देवस्य"त्वेत्यभिघार्य अन्नं प्रक्षिप्य त्रिभागं कृत्वा कुशाग्रयवसर्षपतिलाज्यदधिपयोयुतं पिण्डत्रयं कृत्वा अतो देवादिनाऽग्रपिण्डं "ब्रह्मजज्ञान"मिति मध्यपिण्डं "रुद्रमन्य" मित्युपरिपिण्डमभ्यर्च्य विष्णुब्रह्मेश्वरेभ्यो निवेदयित्वाऽऽचमनं दद्यात्। यजमानो "मम हृदय"मिति बध्वा हृदयमभिमृशेत्। आचार्यहस्तात्पिण्डं विश्वमन्त्रेणानम्य संगृह्य वैष्णवं पिण्डं पत्नीं प्राशयेत्। ब्राह्मं पिण्डं स्वयं प्राश्याचम्य "विष्णुर्योनि" मित्युदरमभिमृश्य शिष्टं पिण्डं जले प्रक्षिप्य शक्तितो दक्षिणां दत्वा ऋत्विजो हिरण्यभूगवाश्वाद्यैः संपूज्याग्नीन्विसर्जयति। देवताश्च यथेष्टं स्तुत्वा विसृज्य स्वगृहं प्रविश्य चतुर्थीक्रियावदुपगमनं करोति। द्वादशमासादायुष्मन्तं बलवन्तं श्रीमन्तं बृहस्पतिसमं पुत्रं जनयति॥

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे ब्रह्मवर्चसकामादिकर्तव्य-

विधिनिरूपणं नाम

[10]षष्ठोऽध्यायः॥

---

1. B-प्रागदि. 2. म–अर्घ्यान्त मभ्यर्च्य 3. B-दक्षिणतः. 4. B-वामेइति न दृश्यते. 5. घ. सहितं 6. छ. B-स्नापयित्वा 7. ब्राह्मं प्राजापत्यमित्यधिकं 8. B-पद्माग्नावित्यधिकं. 9. शालितण्डुलेन. 10. ग–अष्टमः खण्डः.

## ।। अथ सप्तमोऽध्यायः ।।

अथ श्रीकामस्य श्रीसाधनम्। "श्रियं तु साधयेद्यत्ना" दितीयं वैदिकी श्रुतिः। तस्मात्पूर्वजन्मकृतमन[1]पेक्ष्यैव श्रियं साधयेत्। तत्र श्रीर्द्विधा। राजश्रीर्ब्रह्मश्रीश्चेति। [2]आढ्यमात्रेण येन[3] केनचिदैश्वर्येण [4]युक्तता राजश्रीरिति विज्ञायते। ब्रह्मश्रीस्त्वग्निष्टोमादीनां सर्वेषां क्रतूनामवाप्तिरणिमाद्यैश्वर्यसिद्धिश्च। ब्राह्मणैश्च पूज्या ब्रह्मश्रीरिति [5]ब्रह्मवादिनो वदन्ति। तस्मा[6]द्विशतदलयुतं कुण्डं कृत्वा पूर्ववदाधारं हुत्वा तत्राग्निमुप[7]लक्षयेत्। विना यत्नेन दीप्यते शिखाभिरुज्ज्वलद्भिः सहितो वा भवेत्प्रदक्षिणं वा वर्तते हृद्यं वा गन्धं रूपं वा सुमनोरमं सोऽग्निः [8]सिद्धिं करोति। विसृजेद्वा विस्फुलिङ्गान् दुर्गन्धो यदि वा न दीप्यते अपसव्यं ज्वलत्यसिद्धये। तस्मादेवं ज्ञात्वा साधयेत्। दक्षिणनयनादिस्फुरणमुपलक्षयेत्। [9]उद्वहनकाले यदाज्यगन्धो वाति तदा हस्तप्राप्ता श्रीरिति वेदितव्या। एवं नियमेन पद्महोमः कर्तव्यः।

श्रीकामस्यविधिः

अग्निसाधने निमित्तनिरीक्षणम्

पद्मशकलैः पुराणपुष्पैर्न जुहुयात्। श्रियोऽप्रियाणि भवन्तीति। दिनद्वयमतीतानां पुराणत्वमाचक्षते। उभयहस्तेन वामहस्तेनवा[10]न होतव्यम्। यातुधाना [11]गृह्णीयुरिति। वाग्यत एव जुहुयात्। वार्तायुक्ताहुतिमसुरा [12]गृह्णन्ति।

होमकाले वर्ज्यानि

श्रियं पद्मप्रभां पद्माक्षीं पद्ममालाधरां पद्मासनां पद्महस्तां सुमुखीं सुकेशीं शुक्लाम्बरधरां सर्वाभरणभूषितां सुप्रभया ज्वलन्तीं [13]सुवर्णकुम्भस्तनीं सुवर्ण[14]प्राकारां सुदन्तोष्ठीं सुभ्रूलतां चिन्तयेत्। एवं बुद्धिस्थां कृत्वा पद्मैः श्रीसूक्तेन होमं कुर्यात्। एवं लक्षहोमाच्छ्रीः प्रत्यक्षा भवति। तां दृष्ट्वेष्टमर्थं लिप्सेत्। सेष्टं वरं ददाति श्रीः। राजश्रीकामो विल्वफलेन जुहुयात्। देव्या ध्यानमात्रेणापि द्रव्यवान् भवति। किं पुनस्त-

श्रीप्रसादः

राज्यश्रीकामस्य विधिः

1. B–अनवेक्ष्य. 2. घ. ज–आराध्यतममात्रं. ख. आराध्यतन्मात्रं. 3. B–येन केनचिद्युक्तवरराजश्रीः. 4. M–वित्तता. 5. M–ब्रह्मविदः. 6. ज–द्विशततम. 7. M–नयेत्. 8. M–सिद्धिकरः. 9. M–उद्वमहत. 10. छ–यदि. 11. M–गृह्णन्तीति. 12. M–स्वस्थाः. 13. छ–सुवर्ण. 14. M–प्राकारयुताम्.

उत्तरफल्गुनी-पूजा

दुपासनया । तस्मादुत्तरफल्गुन्यां यत्नतो देवीमभ्यर्च्य यो होमं कुर्यात्तस्य न दारिद्र्यं भवति । पूर्ववदभ्यर्च्यैवं जुहोतीति विज्ञायते ॥

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे श्रीकामकर्तव्यविधिर्नाम

[1] सप्तमोऽध्यायः ॥

## ॥ अथाष्टमोऽध्यायः ॥

विद्याकामस्य विधिः

[2]विद्याकामः स षण्णवतिदलं कुण्डं कृत्वा त्रिमधुराक्तैरश्वत्थसमिद्भिः ब्राह्मं प्राजापत्यं [3]वैघ्नं वैष्णवं च हुत्वा पश्चात्त्रिणेत्रीं विद्युद्रूपां हस्तद्वयेन कमलधृतां उभाभ्यां[4] वसुप्रदां सुमुखीं सुकेशीं पद्मासनस्थां मुक्ताभरणभूषितां प्रसादाभिमुखीं शुक्लवस्त्रधरां सुरूपां चिन्तयेत् । एवं ध्यात्वा सारस्वतं नित्यं द्वादशसहस्रं हविष्याशी द्वादशरात्रं जुहोति । त्रयोदशाहे रात्रौ दीर्घं विकृतरूपं पश्यति । तद्दृष्ट्वा निर्भयो भवेत् । पश्चात् विकृताकारं भूतं पश्यति । तद्दृष्ट्वा निर्भयो भवेम् । ततो भगवतीं पश्यति । तां दृष्ट्वा मातृवन्मत्वा नमस्कुर्यात् । सैवं वदति वरं वृणीष्वेति । एवमुक्तोऽपि मुहूर्तं स्थित्वा पूर्वोक्तमन्त्रमष्टोत्तरशतं जप्त्वा भगवतीं प्रसीद प्रसीदेति पश्चोक्त्वा वरं ब्रूयात् । यद्यत्कामयते [5]तत्सर्वं सरस्वती ददाति[6] ।

अकल्मषकामस्य शान्तिकामस्य च विधिः

अकल्मषकामः षट्त्रिंशद्दलयुतं कुण्डं कृत्वा तिलेन रात्रिसूक्तं द्वादशसंख्यया जुहोति । शान्तिकामः ऋत्विग्दलयुतं कुण्डं कृत्वा[7] श्वेतपद्मै-र्बिल्वपत्रैर्वा [8]रात्रिसूक्तं यद्देवादिपारमात्मिकमीङ्कारादिवैष्णवं ब्राह्मं प्राजापत्यं दौर्गं विष्णुगायत्रीं च[9]जुहुयात् । तत्क्षणात्सर्वपापं नश्यति । सर्वदोषाश्च नश्यन्ति । यद्यत्क्रियते तत्सर्वं विष्णुमभ्यर्च्य आघारं हुत्वा पश्चात्कर्म प्रवर्तते यस्मात्सर्वदेवमयी कपिला तस्मात्कापिलेन घृतेनैव जुहोति । सर्वशान्तिदं सर्वकामप्रदं पौण्डरीकाग्निविधानमिति काश्यपः ॥

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे पौण्डरीकाग्निविधानं नामाष्टमोऽध्यायः ॥ [10]

1. ग. नवमः खण्डः 2. घ-पुस्तके इतः पत्रपञ्चकं 12 to 16 गलितं. 3. M-वैश्वदेवं. 4. A.B. हस्ताभ्यामित्यधिकम्. वसुप्रभामिति पाठः. 5-B, सर्व.. 6. ग-इति दशमः खण्डः. 7. ख-कृत्वेत्यारभ्य प्राजापत्यमित्यन्तं न दृश्यते. 8-M रात्रिसूक्तमिति नास्ति. 9. M-जुहोति. 10. ग-इत्येकादशः खण्डः.

## ॥ अथ नवमोऽध्यायः ॥

अथातोऽद्भुतं शान्तिं व्याख्यास्यामः । अद्भुतान् मनुजानामपराधाद्देवाः सृजन्ति । अद्भुतास्त्रिविधाः । दिव्यान्तरिक्षभौमाश्चेति । दिव्या ग्रहविकारग्रहयुद्धाद्यनेकविधाः । आन्तरिक्षाः परिवेषेन्द्रचापोल्कापाताशनिपातनिर्घातो[1]पलवर्षगन्धर्वनगरधूमेन्द्रकेतुप्रतिसूर्यादयः[2] । भौमाश्चरस्थिरभवा[3] अनेकविधाः । तत्रोत्तममध्यमाधमाश्चेति त्रिविधा जङ्गमजाः । विद्वद्ब्राह्मणतपस्विषु कालदेशस्वभावविरुद्धं यद्दृष्टं तत्प्रवरम् । नागगोमायुमहिषादिषु यद्दृष्टं तन्मध्यमम् । पक्षिसर्पकृमिकीटपतङ्गादिषु यत्तज्जघन्यम् । स्थावरजाः त्रिविधाः । प्रतिमादिषु प्रवराः । प्रासादादिषु मध्यमाः । वृक्षादिष्वधमाः । तत्र प्रतिमादिषु रोदनहसनज्वलनपरिवर्तनस्वेदरुधिरस्रावक्रिमिकीटपतङ्गतृणाद्युद्भवज्वलन[4]धूमादयः । प्रासादादिषु अप्रवेश्यमृगपक्षिसर्पादिप्रवेशनसर्पणारोहणचलनपरिवर्तनोपसर्पणभित्तिकवाटोर्मा .... .... रासनशयनायुधांबरकू[5] पाग्निहोत्रोपस्करविहारमक्षिकावल्मीकरक्तस्त्रीजननादयः । वृक्षादिषु पतनपरिवर्तनोपसर्पणफलपुष्पपत्रिकाभादिविकाराद्यद्भुता भवन्ति ।

अद्भुतशान्तिविधिः

अद्भुताःत्रिविधाः

त्रिविधाः जङ्गमाः

त्रिविधाः स्थावरजाः

दिव्या आन्तरिक्षाश्च राजराष्ट्रविनाशाय । भौमास्तद्भूमिकाशमातङ्कार्थनाशानावृष्टितस्करपरचक्रभयानि च सूचयन्ति । अतः शान्तिविधानमारभेत् । दिव्यान्तरिक्षयोः ग्रहशान्तिविधानेनाभ्यर्च्य महाशान्तिं सप्ताहं हुत्वा देवेशं सहस्रैः [6]साष्टभिः कलशैः संस्नाप्य महतीं पूजां कृत्वा ब्राह्मणानन्नेन परिवेष्ट्य हिरण्यगवाश्वादीन् दत्वा भगवतो महतीं पूजां कृत्वोत्सवमारभेत् । भूमिप्रभवेषु देवेशमभ्यर्च्य शान्तिं सप्ताहं हुत्वा गुरवे दक्षिणां दद्यात् । ब्राह्मणान् भोजयित्वा पश्चादग्निषु शान्तिं जुहुयात् । जपन्नेषु यद्देवादिवैष्णवान्तं हुत्वा शक्तितो दक्षिणां दद्यात् । स्थावरप्रभवेषु विष्णुजा लोकविनाशाय ब्रह्मजा द्विजातीनां रुद्रजा सर्ववर्णानां लोकपालभवा राज्ञां स्कन्दजा माण्डलिकानां विनायकजाः सेनाधिपानां दुर्गामातृजा. नृपस्त्रीणां आदित्यजा नृपवाहनायुधानां तत्तत्परिवारजास्तद्भक्तानां विनाशाय भवन्ति । एतेषां शान्तिकर्म सद्य एव समारभेत् । भगवद्रूपे तु सन्दृष्टाश्चेदाराधकः

अद्भुतदर्शने दोषः

शान्तिप्रकारः

1-M उरुपवन. 2-M सूर्योदयादयः । 3-M च. 4-M धूमिकाकूताद्याः. 5-M रूप. 6- ज. अष्टभिः. प. अष्टशतैर्वा.

कृच्छ्रमारभ्याजाग्नौ महाशान्तिं सप्ताहं क्षीरवृक्षसमिद्भिः त्रिमध्वक्ताभिर्हुत्वा देवेशं शताष्टकलशैः संस्नाप्य [1]महतीं पूजां कृत्वा ब्राह्मणान् भोजयेत्। सर्वेषां शान्तिं ब्रह्म-रुद्रयोः तद्दैवत्यं पलाशसमिद्भिः कोटिहोमं हुत्वा ब्राह्मणान् भोजयित्वोत्सवं कारयेत्। अन्येषां तत्तद्दैवत्यं सहस्रशो हुत्वा ब्राह्मणान् भोजयेत्। सर्वेषां शान्तिं त्रिरात्रं वा जुहुयात्। प्रासादादिषु सर्वेष्वाज्येन शान्तिं हुत्वा शक्तितो दक्षिणां दद्यात्। वार्क्षेषु सौम्यमिन्द्राग्निदैवत्यं वैष्णवं च हुत्वा पौण्डरीकाग्नौ विष्णुसूक्तेन श्रीसूक्तेन पद्महोमेन

यजुःसंहितादि जपः

जपेन यजुःसंहितायामारण्यकेन वा सर्वेषां दोषाणां शान्तिर्भवतीति। शान्तिहोमविधाने सर्वत्र विष्णोर्नुकादिमिन्द्राहुत्या श्रावितादीन् जुहुयात्। महाशान्तिविधाने सर्वत्र पारमात्मिककाराद्यष्टाशीतीति काश्यपः॥

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे अद्भुतशान्तिविधिर्नाम [2] नवमोऽध्यायः॥

## ॥ अथ दशमोऽध्यायः॥

पौष्टिकविधिः

पौ. देशः

अथातः पौष्टिकं व्याख्यास्यामः। किञ्चिद्रक्तयुतं पाण्डुरं कुशदर्भापामार्गपलाशदूर्वातुलस्याद्यैर्यज्ञवृक्षैस्तापसैराकीर्णं कदल्याम्रपनसपुन्नागार्जुनचम्पकाशोक बकुलसरलसिंदुवारपाटलेन्दीवरहरिपत्रपरालाशुनकपुष्पतमालकैरन्यैः पुंवृक्षैश्च[3] परिवृतं समशीतोष्णं प्रागुत्तरानतं अपापाणशर्कराकीर्णं वालुकायुतं सुगन्धमेतत्पौष्टिकं क्षेत्रमिति[4]।

पौ. विमानादिः

विमानं श्रीवृत्तं फुल्लोत्पलं [5]मुकुन्दानुकूलं कुम्भाकारं त्रिकूट सोमार्धकं कर्णिकाकारं महाहंसमयूरकूर्म[6]प्रलीनकाञ्चनाकारगरुडाकारस्वस्तिक [7]वृक्षमदनाकारं [8]हारब्रहद्रथचतुस्फुटमकुटाकारं महाशङ्खध्रु[9]वाकारं महेन्द्रं [10]प्रकीर्णं चेत्येतानि प्राग्दक्षिणपश्चिमद्वारमिष्टकादारुजं सुवर्णरजतताम्राच्छादितशिखरमष्टावरणं पञ्चावरणं त्र्यावरणं[11] वा पौष्टिकम्।

मृद्दारुमयं षड्ढस्तं पञ्चहस्तं बेरं श्यामलं पीतं वा कौतुकं ताम्ररजतकृतं

1. ख. महतीं नास्ति. 2. ग. इति द्वादशः खण्डः. 3. M–स्त्रींवृक्षैश्च. 4. ग. इति त्रयोदशः खण्डः. 5. ज. मुकुंदासुमालालंचीन ख.सुमालांछन. 6. M–प्रकीर्णक. 7. M–वृत्त. 8. ख. ज. भार. 9. M-श्रवणाकार. 10. ख. ज. प्रह्वादि. 11. M–द्यावरणं

पुष्पं द्विवर्णं त्रिवर्णयुतं गन्धं चन्दनागरुकोष्ठयुतं धूपं गुग्गुल्वगरु[1]चन्दनश्रीवेष्टघनारुलमिश्रं दीपं घृततैलयुतमष्टाङ्गुलोच्छ्रयं वस्त्रं तान्तवमौर्णपट्टजं हव्यं पूर्वोक्तं समिधो न्यग्रोधखदिरप्लक्षमधूकजम्बूश्रीपर्णपनसाद्या ये क्षीरिणः पुष्पयुता मध्याङ्गुलिपरिणाहा द्वादशाङ्गुलयुता मधुदधिघृताभ्यक्ताः द्रव्यं यवसर्षपाः [2]अग्नयः श्रामणकाहवनीयान्वाहार्यगार्हपत्यावसथ्यसभ्यपौण्डरीका इत्याचक्षते[3] ।

अथाभिचारिकम् । राज्ञां शत्रुविजयो धर्मः[4]। येन पथा भगवन्तमभ्यर्च्य शत्रून् जयति[5] तदाभिचारिकमिति । शिरीषनिम्बकोविदारार्कबदरपुत्रजीवकरुद्राक्षाद्यैः कण्टकवृक्षैश्च परिवृतं श्ववानरमूषिकोरगकुक्कुटवायसगृध्रश्येनकाकाद्यैः क्रव्यादाद्यैः सरीसृपैश्च सङ्कीर्णमत्युष्णमतिशीतलं पाषाणशर्कराकीर्णं यक्षरक्षोभूतोरगप्रेतवेतालैराश्रितं अतिरक्तकृष्णसम्मिश्रं[6] किञ्चिद्दौशकारं मरीचपिप्पलगुलपूतिगन्धं क्षेत्रमाभिचारिकमित्युपदिशन्ति। विमानमलक्षणं मृत्पक्व[7]कल्पितं चर्मपांसुकपालतुषकेशास्थियुतं बेरमिष्टकाकल्पितं पक्वं वा कण्टकवृक्षैर्नपुंसकवृक्षैर्वा कृतं कालायसपाषाणचूर्णहिङ्गुलशुनतैलशाणैर्वान्यैः फलपक्वद्रव्यैः संस्कृतमतिरक्तातिकृष्णमृद्युतातिप्रमाणातिदीर्घातिस्थूलातिकृशम् ।

आभिचारिकविधिः

आ देशः

कौतुकं कृष्णायसारकूटवृत्तलोह[8]सीसाद्यैः कृतमार्द्राश्रेषामूलकृष्णाष्टमीचतुर्दश्यादिदिनेषु शर्वर्यां स्थापितं पुष्पं पूतिगन्धं मदगन्धि शिरीषमहाभद्रकार्ककदंबरक्तकुसुदपुष्पनिर्गुण्डीपत्रैकवर्णयुतं गन्धं रक्तचन्दनमुग्रगन्धं दीपो नारिकेलैरण्डपुन्नागमधूकनिम्बकरञ्जादिस्नेहयुतो मध्यमाङ्गुलोच्छ्रायः अर्घ्यं जलतण्डुलयुतं वस्त्रं नीलमाभरणं कालायससीसादिकृतं अग्निः कपालादिजं समित्कपित्थनिम्बभल्लातविभीतकाद्ययाज्ञिकानामष्टाङ्गुलैः षोडशाङ्गुलैर्वायताङ्गुष्ठाग्रपरिणाहा वामहस्तयुतं पृष्ठाग्रनिक्षिप्तं वार्तायुक्तं द्रव्यं कटुतैलनिम्बपत्रयुतं तदाभिचारिकम् ।

नीलश्यामादिकृत्रिमवर्णैरालेख्यं सुधया कृतं बिम्बं दक्षिणाभिमुखं शयानं देवीवियुक्तमाभिचारिकम् ।

---

1. M-कोष्ठु. 2. ख. ज. म. पैण्डरीकेत्यारभ्यते. 3. ग. चतुर्दशः खण्डः.
4. M-मतः। तद्गुणं भगवन्तमर्चयित्वा. 5. M-तदाभिचारिकम् । तदत्र निषिद्धमिति.
6. ख. ज.- सममिश्रम् 7. ख. च. - मात्रे कल्पितमिति दृश्यते. 8. M-सीससिश्रैः.

बहुना किं प्रलापेन यद्यदत्र विधिविहीनं सशल्यकृतं तत्सर्वमाभिचारिकमिति काश्यपः ॥

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे पौष्टिकाभिचारिकविधानं नाम [1] दशमोऽध्यायः ॥

---

## ॥ अथैकादशोऽध्यायः ॥

वास्तुविधानम्

अथ वास्तुविधानं व्याख्यास्यामः । वास्तुसंपत्सर्वसंपन्मूलम् । अविरुद्धे वास्तुन्युषित ऐहिकामुष्मिकाणां सिद्धिर्भवति । अतः सम्यक्परीक्ष्यैव सर्वकर्माणि कारयेत् । शान्तिकं पौष्टिकं वा देशमाश्रित्य वृद्धिदेशं गृह्णीयात् ।

गृह्यभूमिः

देशो नवविधः

तत्र वैष्णवं ब्राह्मं रौद्रमैन्द्रं गारुडं भौतिकमासुरं राक्षसं पैशाचमिति नवविधो देशः । तत्र रूढतरुजन्तुगन्धवर्णरसैः परीक्ष्याहरेत् ।

परीक्षा

वैष्णवदेशः

तत्राशोकार्जुनकर्णिकाराश्वत्थधातकीप्रभृतिभिः पुंवृक्षैश्च स्थलारविन्द[2]दवित्थविष्णवाक्रान्ताखुकर्णितुलसीदूर्वाद्यैः [3]द्विजर्विनृपाढ्यादारकं हरिवारणशार्दूलवृषभहंसशुकशारिकाकपोताद्यैः[4] स्वभावाह्लादिभिराकृतिवर्णभद्रकैराकीर्णं सोदकं पद्मचन्दनगन्धाढ्यं स्निग्धं श्वेतसम्मिश्रं सरक्तं रसनामोदनं मधुररसं बुद्धिसत्वबलप्रदं गम्भीरशब्दं सुश्लक्ष्णं समोष्णं शीतं वैष्णवमिति[5] ।

ब्राह्मदेशः

बिल्वपलाशादियाज्ञिकैर्वृक्षैः कुशदर्भदेवनन्दासुरघ्निगुल्मप्रभृतिभिर्युक्तं प्राज्ञद्विजहरिणहंसशकुनिभिराकीर्णं हूयमानाज्यचरुपुरोडाशगन्धितं श्वेतवर्णमीषत्कषायमधुररसं सौम्यं सत्वगुणोपेतं ब्रह्मवर्चसकरं सर्वकल्याणसंपत्प्रदं तद्ब्राह्ममिति[6] ।

रौद्रदेशः

कण्टकीतिन्दुकतिन्त्रिणीकरंजवेणुजपार्ककार्पासकालरक्तकरंदालां[7]कुलभिगन्धमाद्यैः रूक्षवृक्षैः रुद्रपाषण्डिचण्डैः हिंस्रमुपचण्डिपक्षिभिरसुखासीनैः[8] तत्माघ्रायत्रासयुक्तपशुभिराकीर्णं स्तोकरक्तासितवर्णं कपोतसदृशरूक्षं

---

1. ग–१५ खण्डः. 2. छ–कदली. 3. ख–नृपाद्यद्वारक. 4. ख–B कपोतिन्यैः 5. ग–षोडशः खण्डः. 6. ग–इति सप्तदशः खण्डः. 7. ख.ज–कलम. 8. ज. सुखासीनैः, B – सुखविहसैः.

[1]ललाटवत्कारामलरसं क्रूरकर्मप्रदं सुखप्रीतिविवर्जितैकं शौर्यवीर्यप्रदं श्रुतिधर्मविरुद्धं यत्तद्रौद्रमिति[2] ।

पनसाम्रकदल्यर्जुनपुन्नागवकुलपाटलसिन्दुवारेन्दीवरसेरिंदारिंदपाकंदिका .... ......... मालाजाविकापुष्पमालाप्रभृतिभिः वैश्यशूद्राढ्यतमनायकालंकृतक्रीडामृगपक्षिरिरंसुप्राणिभि[3]र्जलवर्णयुतैराकीर्णं पाटल्यागन्धाढ्यं हरितवर्णं क(?)प्रवीरसं धनधान्यविवृद्धिदं [4]पशुकृषिबलाह्लाददं राजसगुणप्रदं तदैन्द्रम्[5]। ऐन्द्रदेशः

अङ्कोलदमकलरधामाकादित्यसाम्यसर्पध्नैरण्डजर्जरहंससिंहपुष्पाद्यैः मार्जारनकुलचकोरगोधाशशवृकादिभिराकीर्णं मल्लिकामालतीनिम्बधूमगन्धाश्रयं हरितवर्णनिभं मदाह्लादपथसंयुक्तं कषायरसं शौर्यवीर्यकरं प्रजासंपद्वृद्धिदं तद्गारुडमिति ॥ गारुडदेशः

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे वैष्णवादिदेशलक्षणं नाम
[6] एकादशोऽध्यायः ॥



## ॥ अथ द्वादशोऽध्यायः ॥

अग्निमन्थकेतकनिर्गुण्डीकरवीरकिंशुकहिन्तालमाधवीभूतमोदिनीनन्दादूर्वाराजवल्लीकाद्यैर्मिश्रं[7] गुलोपेतैः पाणिनाभिस्थूलैर्मण्डूकाद्यैश्चाध्युषितं चूर्णकभस्मगन्धितं सम्मिश्रवर्णं तिलरसं प्रजानामन्नदं पुष्टिवर्धनं निद्रातन्द्राविवृद्धिदं तद्भौतिकम्[8]। भौतिकदेशः

भल्लाततपनोत्कटपालेकसन्दालावरूहयज्ञघ्नपलंडुप्रभृतिभिः पाषण्डरोमकधूर्तकिरातकुक्कुटचक्रगृध्रोरगवृश्चिकशल्ल्यादिभिराकीर्णं हरीतकगन्धसीताश्री — तातिरक्ताभं श्लेष्मातकरसं [9]विद्यायागविनाशनं युद्धदर्पप्रदं तदासुरमिति[10] । आसुरदेशः

कपित्थदण्डकाण्डकर्माग्निदाहरक्तपुष्पोद्भवार्द्रपूगप्रदविषाद्यैः चोरचण्डालाशुभ-

---

1. ख. ज – ललागावक्राम्ल. 2. ग–अष्टादशः खण्डः. क – लालारसामोदाम्लरसं. 3. ख. ज–बहु. 4. ख. ज–पशव्य कुषिबलाह्लाददं. 5. ग–१९ खण्डः. 6. ग-२० खण्डः 7. एतावत्पर्यन्तं घपुस्तके गलितं. 8. ग-२१ खण्डः. 9. छ-बिन्यागं विनाशनं. 10. ग-२२खण्डः.

राक्षसदेशः

मृगपक्षिभिः चिचुलिरोगैराक्रान्तं मरीचगोलगुण्डाढ्यमतिरूक्षातिरक्तं प्रजानां क्षयकारणं सुरामांसादिवृद्धिदं तद्राक्षसमिति [1]।

पैशाचदेशः

श्लेष्मातकविभीतकशाल्मलीसुरुण्डवञ्जुलपापकर्णकवचनापचनीकर्तारिका-वासनीलसोमघ्निप्रभृतिभिः श्वखरोष्ट्रसूकरसृगालचण्डालपुलिन्दशाकु-निकैर्जुष्टं पूतिदुर्गन्धमञ्जिष्ठागन्धितमूषररसान्वितं रूक्षं मृद्वालनिभ-मुद्वारकरं सरोगं तमिस्रं तामसदं सर्वक्षयकरं तत्पैशाचमिति ।

एतत्संज्ञानां तद्देशं तस्मात्सुरर्षिमनुष्याणामन्यषट्के वा समाचरेत् । तेष्वेभ्यो ब्राह्मणानां ततो द्वे क्षत्रियाणां विट्शूद्रयोः पुनरेकमेकमिति जानीयात् । तत्र च तद्वर्ण-वृद्धिदां भूमिं ज्ञात्वैव वसेत् ।

सर्वाशागांबुयुता श्रेष्ठा [2]प्रागुत्तरानता मध्यमा अन्यानता जघन्या अग्राह्या ।

लक्षणान्तराणि

ज्यां खनित्वा तन्मृदं संगृह्य पूरिता अधिकाचेदुत्तमा पूरिता समा-चेन्मध्यमा न्यूनपांसुः कनीयसी । मधुराम्लकषायलवणरसा प्रागुत्तरा-परयाम्यानता मेघगजशार्दूलदुन्दुभिनिस्वना शुक्लरक्तहरितासितवर्णा[3]क्रमशो भवतीति विज्ञायते ॥

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे भौतिकादिदेशलक्षणं नाम [4] द्वादशोऽध्यायः ॥



## ॥ अथ त्रयोदशोऽध्यायः ॥

[5]अथचैवं देशमभिज्ञाय शुभमासपक्षमुहूर्तेषु भूपरीक्षामारभेत् । सुभिक्षे

भूपरीक्षाकाल विचारः

[6]सुराजनि धर्मिष्ठेऽब्दे माघप्रोष्ठपदाषाढान् हित्वा अन्येषु शुक्लपक्षे-ष्वसितेऽन्त्यत्रिभागे भागंहित्वा रेवतीरोहिणीपुष्यस्वातीश्रविष्ठाश्रवण शतभिषक्चित्रादित्याश्विनीसौम्यानामन्यतमर्क्षे [7] सुरासुरमन्त्रीन्वर्क-शशिजवारेषु नन्दादिषु रिक्तां विवर्ज्यान्यासु तिथिषु अष्टमीं षष्ठीं विष्टियुतां हित्वा करणेषु चरेषु सर्पेन्द्ररौद्रान् विवर्ज्य सुयोगे वैधृतिविष्कम्भवज्रपरिघव्याघातशूलाति-

---

1. ग–२३ खण्डः. 2. B–स्वपूरितापांस्वधिकापदगा ज्यायसी समा समपांसुः इति भिन्नानुपूर्वी. 3. B–वर्णानां. 4. ग–२४ खण्डः. 5. B–चेद्दशं. 6. B–राजनि. 7. घ. ज–सुरासुरमिमं त्राणां द्रेक्काणां शकवारहोरासुरिक्तामिति पाठः.

गण्ड व्यतीपाताद्भुत तिथि वारर्क्ष [1]योगदोषादित्यारासितराहुदोषयुक्तानपोह्य दिवैवं निर्मले वित्काव्यगुरुहोरायां चतुर्थाष्टमे ग्रहैर्हीने शशिन्यव्ययायोदयायुगगे त्रिषडेकादशगैः पापैः केन्द्रगैश्च शुभैरन्यैरूर्ध्वाननहोरायां पूर्वाह्णे यजमानो भगवन्तमाराध्य ऋत्विग्भिस्सार्धं पायसं भुक्त्वा पुण्याहान्ते भामिनीं सर्वभोगयुतां शुभामेकां सर्वाङ्गीणार्द्रचन्दनां शुक्लमाल्याम्बरधरां मुक्ताभरणभूषितां [2]पद्मप्रदीपहस्तां पुरस्कृत्य सर्वे चन्दनदिग्धाङ्गाः शुक्लस्रग्वसनाः शुभ्राः प्राङ्मुखा उदङ्मुखा वा उद्देशिनीं महीं प्रेक्ष्य अत्वराः शकुनान्युपलक्ष्य विष्णोर्नामानि जप्त्वा पश्चात् "प्रीयतां भगवानित्यारभ्य कुर्वन्तु च सहायता"मित्यन्तं शकुनसूक्तं च जप्त्वा गच्छेयुः ।

तद्विधाने कालविचारः

प्राकरणीयम्

तत्र वृषहयगजधेनुध्वजछत्रचामरचक्राङ्कुशपायसदैवताकृति[3]हरिद्रागोमयव्रीहितण्डुलतिलयवालङ्कृतगणिकाभामिन्यादिदर्शने "गच्छाहर गृहाण वद जय शाधि प्रसी"देत्यादिश्रवणे वीणावेणुमृदङ्गवेदमङ्गलानुवाकसूक्तश्रवणे च दधिक्षीरघृतजलसुरापूर्णं कुम्भं रज्जुमुखं पिठरं[4] वा शकटविवधमदोत्कटमातङ्गान्यतमन्यस्तं लोहितं सीसान्यलोहं रत्नं दीप्तमाशुशुक्षणिं वा दृष्ट्वा परमां वृद्धिमादिशेत् । स्कन्धवहं कुम्भं शङ्खमकुटभेर्यादि दृष्ट्वा स्तोकवृद्धिरिति । कृकलासपल्लाक्षक्ष्वेदि कृष्णरज्जुबालचकोरशुकशाबश्वेतकूबररक्ततुण्डकोकिलबलि जीवंजीवभृङ्गराजरामा वामाद्दक्षिणगाः शुभदाः । चाषश्येनबलाकागृहगौलिमाकरिवनकुक्कुटकुण्डिविशालीदात्यूहाः दक्षिणाद्वामगाः शुभदाः ।

शकुनानि

वृकोलूकगौलिकद्रौणानां स्वरो वामतः शुभदः । कुणिकाणकृशह्रस्वपापरोगिछिन्ननासपाषण्डमुण्डषण्डचण्डालगृध्रश्येनवानरोरगगजवाजिनररुधिरस्राव[5] तरुपाताशन्याद्युत्पातेन्द्रचापपरिवेषाहर्नक्षत्रजालप्रतिसूर्यादयः कार्यविघ्नकरा भवन्ति ।

यत्रास्थि दृश्यते तत्र वास्तुपुरुषस्य तत्पार्श्वे पिशाच इति अश्वास्थि चेद्रक्ष इति श्वखरोष्ट्रान्यतमास्थिचेत्सर्प इति मयूरास्थिचेत् देवावास इति

1. A. योगयोगदोष 2. च पद्महस्तां. 3. A, हरित. 4. A. रज्जुमुखां पीठकरं. 5. B. तरुपातनाश

विजानीयात् । तत्काले वारणमदविसर्ग प्रत्याशनप्रसवमदोन्मत्तादिसंभवो महदैश्वर्य-सूचनकृत् । ध्वजपताकाद्यग्निदहन पतनकलह गजशकृन्मूत्रविसर्गाद्युद्भवेऽर्थहानिः । इत्येवमादिशकुनानि विचार्य इष्टप्रदेशं नवधा परिकल्प्य मध्यतः सुरमनुष्यराक्षसा-

नवपदकल्पनम्

श्रयास्त्रयोंऽशाः । तेषु देवांशेऽत्यन्तशोभना प्रारब्धकार्यसिद्धिकरी मनुष्यांशे बहुविघ्नमिश्रिता प्रयत्नसाध्या राक्षसांशे मरणरोग-[1]भङ्गविध्नकरा भवन्ति ।

एवं ज्ञात्वाऽन्तः[2]करणमदपरिम्लानाक्षिभुजादीनां दक्षिणवामस्फुरणवहनादिना शुभाशुभमुपलक्ष्यारभेत । अभीष्टे देशे शुभराशौ स्थित्वा लक्षयेत्[3] । प्रागुत्तरान्तं क्रमेण क्रियादिषु रिप्पान्तं त्रिपर्यायं संस्थाप्य शुभर्क्षे शुभग्रहोदयेस्थिरेभामिनीं संस्थाप्य "अङ्गं स्पृश"स्वेति तामुक्त्वा स्पृष्टाङ्गेनापि लक्षयेत्[4]। अक्ष्युरोजहृदयास्यस्पर्शने महदैश्वर्यकपोल-कर्णश्रवणगुह्यबाहुललाटपार्श्वनासाभ्रूस्पर्शने वीर्यविवर्धनं पृष्ठोरुकक्षनखकेशस्पर्शने दुःख-विघ्नकरम् । तयोक्तपदाक्षरे प्रथमद्वितीयतृतीयचतुर्थपञ्चमवर्गाद्यन्यतमाद्युक्ते महदैश्वर्यं षष्ठसप्तमाष्टमेषु [5]कचटवगौष्ठ्यान्तस्थोक्तौ मरणकलहविघ्नानीत्यत्यचे (?) दनिलदह-नाक्षिश्रवणयुगलानां (?) पञ्चवर्गाणां पञ्च क्रमेणाजादिषु युज्यन्ते । शेषान् पृष्ठे स्थाप्य राशिवशात् ग्रहवशाच्चापि लक्षयेत् । एवमालक्ष्य शुभबहुलेष्वारभेत् । ततो निर्गमने पूर्वोक्तशकुनान्युक्तप्रतिमाणि शुभानीति ज्ञात्वा स्वगृहं गत्वा शुभर्क्षे-कर्तुरनुकूलर्क्षे कर्षणं कृत्वोप्तबीजानि वापयित्वा प्ररूढसस्यानि गोगणेभ्यो निवेद्य ग्रामनगरपत्तनादीन् विन्यासविधिनाऽभिनिवेशयेदिति विज्ञायते ॥

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे भूपरीक्षाविधिर्नाम

[6] त्रयोदशोऽध्यायः ॥



## ॥ अथ चतुर्दशोऽध्यायः ॥

ग्रामादिविधानम्

नवधाभेदः

अथ ग्रमादिविधानं व्याख्यास्यामः । ग्रामाग्रहारनगरपत्तन-खर्वटकुटिकसेनामुखराजधानीशिबिरा इति भेदा भवन्ति । विप्राणां

1. B- यज्ञभङ्गकराः 2. A- करणाह्लादपरिवृतः 3. ग. 25 खण्डः 4. ग. 26 खण्डः 5. A- कचटवर्गेषूक्तेषु मरणकलहविघ्नानीत्यान्यदनिल. 6. ग. 26 खण्ड.

सभृत्यानां निवासो ग्राम इति। स एव विप्रमुख्यानामेवाग्रहारइति। अनेकजातिसम्बाधमनेकशिल्पिजनकुलविकल्पकैराकीर्णं सर्वदेवतासंयुक्तं नगरमिति। द्वीपान्तरागतद्रव्यक्रयविक्रयाधिष्ठितं पत्तनमिति। उभयसंमिश्रं खर्वटमिति [1]सपरिवारकैक ग्रामणिकं कुटिकमिति सर्वजातिसमाकीर्णं नृपवेश्मसमायुक्तं बहुगह्वररक्षाविधानं सेनामुखमिति। चतुरङ्गसमाकीर्णा [2]नृपतिदृष्टान्तदृष्टा राजधानीति। नृपसेनाच नाथनिवेशनं शिबिरमिति।

सर्वदेवमयं तेजो वैष्णवं तद्विप्ररूपमिति नास्ति विप्रात्परं दैवं नास्ति विप्रात्परं ज्ञानं नास्ति विप्रात्परमं पात्रं पवित्राणां पवित्रं ज्ञानानां ज्ञानं सारात्सारतरम्। सावित्रीमात्रसारोऽपि विप्रस्सर्वदेवमयः किंपुनर्वेदपारगः। तस्मात्तेभ्यो दत्तं परमं पुण्यं लोकसन्तानकारणं परत्र [3]सुखदम्। तद्दत्त भूमिदानेन सदृशं नास्ति। अतो द्वादशदशाष्टसप्तषट्पञ्चचतुस्त्रिद्व्येकसहस्रं वा सप्तशतपञ्चशतचतुश्शतत्रिशतमष्टाधिकशतं तदर्धं वा पञ्चाशतद्वात्रिंशत चतुर्विंशत् षोडश द्वादश वा विद्या[4]तपोवृत्ताढ्यान् पत्न्यपत्याभिसंयुक्तान् दरिद्रान् वेदपारगान् सुप्रसन्नान्वैष्णवान्विप्रान् आहूय देववत्तानभ्यर्च्य तेभ्यो नृपाज्ञया ग्रमादिप्रान्तानभिज्ञाप्याऽनुमान्यस्थलवल्मीकाङ्घ्रिपारामतटाकह्रदनद्युपकुल्यादिभिः सीमां विनिश्चित्य तत्र तुषाङ्गारशर्करायोमलसिकतादीन् खनित्वाऽर्पयित्वा करेणुना वत्या(?) च विख्याप्य राज्ञः साम्राज्याब्दाश्रयनामविप्रनामादिकं ताम्रपत्रतले [5]लिखित्वाऽर्पयित्वा [6]तत्प्रमाणकृद्विप्रमुख्यानां हस्ते क्षेत्रभूमिं जलेनसह दत्वा ग्रामविभागमाकल्प्य सपरिच्छदानि गृहाण्युपकल्प्य ददेत्।

विप्रप्रशंसा

भूमिदानप्रशंसा

शासनकरणम्

तस्मात्स्वनामग्रामर्क्षानुकूलर्क्षे ग्रामविन्यासमारभेत्। सहस्रदण्डमानेन तदर्धेनशतदण्डमानेन वा वृत्तं चतुरश्रं वा सममुपकल्प्य दण्डेन प्रागुदग्मानं प्रमीय तन्मध्ये नैर्ऋतस्थाने शङ्कुमाहृत्य तच्छायया[7] श्रवणेन (?) वा प्राचीयामुदीचीं वा कल्पयेत्।

ग्रिमविन्यास प्रकारः

1. B परिचारकैः म. सपरिवारकैरनेकग्रामणिकं. 2 A नृप तन्भृत्यजुष्टं 3. ट. सुखवेदाशेषविधिः A. सुखदे देशेवासः तदत्र 4. B. तपोवृत्तान्. 5. A. ताम्रपत्रे लिखित्वा. 6. म. तत्प्रमाणकृतोदकक्षेत्रां भूमिं जलेन दत्वा 7 A ग्रहणेन.

खदिरचन्दनकदम्बसालासनवकुलानामन्यतमं सारवन्तमसुषिरं समवृत्तं नाह

शङ्कुलक्षणम् द्विगुणं षोडशाङ्गुलमानायतं शङ्कुमाहृत्य शुक्लपक्षे दिने शुद्धे कर्तु-

तत्संस्कारः रनुकूले मुहूर्ते पञ्चगव्यैः प्राजापत्येन प्रक्षाल्य प्रोक्षणैः प्रोक्ष्य पुष्पगन्धधूपदीपाक्षतैरभ्यर्च्य वस्त्रेण परिवेष्ट्य पूर्वेद्युरधिवास्य आचार्यः स्नात्वा अलङ्कृत्यशिल्पिभिर्दण्डमानेन मानितां सुवृत्तांसुसम्मितां स्निग्धां वेदिं कृत्वा न्यग्रोधमण्डलं शङ्कुप्रमाणं द्विगुणमर्धं चोल्लिख्य तन्मध्ये बिन्दू उपकल्प्य तद्बिन्द्वोरन्तरे शङ्कुं प्रातरेव प्राङ्मुखः प्रयतो भूत्वा ब्रह्माणं मनसा ध्यात्वा [1]सूर्यं दिग्देवताश्च प्रणम्य [2]तताद्यैर्ब्रह्मघोषैराघोष्य शङ्कुं संस्थाप्य [3]छायाग्रपतनं दृष्ट्वा सूच्यग्रेणाधाययवमात्रं रेखां सूचयित्वा एवं पूर्वाह्णापराह्णयोरपि क्रमं बुध्वा सूत्रं प्रसारयेत् ॥

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे शुभाशुभपरीक्षणं नाम
[4]चतुर्दशोध्यायः ॥

## ॥ अथ पञ्चदशोऽध्यायः ॥

चतुर्नवषोडशपञ्चविंशत्षट्त्रिंशदेकोनपञ्चाशच्चतुष्षष्टचैकाशीतिशतसंख्यान्य-

ग्रामादिषु पदकल्पनम् तमसंख्यया पदमाहृत्य पदमध्ये गृहाणां सूत्रपीडां परिहृत्य वीथ्यन्तरे गृहश्रेणिकामारभेत[5] ।

श्रीवत्सं नाभियुक्तं पार्श्वयुक्तं नन्द्यावर्तं भद्रकं स्वस्तिकं पद्मकं कर्णिकापद्मं

द्वादशविन्यास-योनयः पद्मावर्तं रथपदं प्रकीर्णकमुत्कीर्णकमिति ग्रामाग्रहारयोर्विन्यासयोनयो द्वादश भवन्ति । नगर्यादीनां कुम्भकवेदिकसिंहाख्यसेनानिवेशन दण्डकादि । एवं ज्ञात्वाऽऽरभेत् । नाभिमहद्राजन्तराख्या वीथ्यश्चतस्रो भवन्ति । तत्र ब्राह्मदैवसमावृते नाभिमहावीथी द्वारतिर्यग्युते राजान्तरवीथीक्रमेण भवन्ति । प्राङ्मुखास्तिस्रः पञ्च सप्त वा वीथ्यः कल्प्य युग्मानन्तर वीथिकाः कल्पयेदेतच्छ्री-वत्सम् । एतदेव वीथिप्रोतसनाभिकं नाभियुक्तम् । उभयोः पार्श्वयोः राजवीथीद्वययुक्तं सनाभिकमनाभिकं वैतत्पार्श्वयुक्तमिति । ईशानानलनीलानिलगाः प्राग्याम्यावरोदङ्मुख-

1. A. सूर्यादि. 2. म. तत्राद्यैः ब्रह्मघोषाद्यैः. 3. A. छायामायतं. 4. ग. -8 अध्यायः. 5. ग. 29 खण्डः.

द्वारनाभिजाः ताभ्योऽन्तरा युग्मश्चैतन्नन्द्यावर्तमिति । द्वारवीथी यदि प्रोत्य क्षुद्रमध्यमा महावीथीं स्पृशन्त्येतद्भद्रकमिति । तिर्यक् तिर्यक् समीकृता रथ्याश्चतुर्थया[1] प्रोताः स्वस्तिकमिति । नाभिमङ्गलवीथीभ्यां वेष्टितं चतुर्द्वारयुतमेतत्पद्मकमिति । स्वस्तिकवत् क्लृप्तं कोणमध्याश्रितनाभ्या द्वारावीथीयुतमेतत्कर्णिकापद्ममिति । भद्रकवत्प्रोतरथ्यान्तं पद्मावर्तमिति । समषड्राजवीथिका प्रागुत्तरमुखा चतुर्द्वारयुता चेत्येतद्रथ[2]पद्ममिति । पद्मनाभिकं तद्युक्तानुगाल्रान्तवीथिकं प्रकीर्णकमिति । तत्पदं प्रतियुक्त व्यत्यस्तक्षुद्रवीथिकमक्षुद्रवीथिकमुत्कीर्णकमिति ।

वृत्तैकवीथिकं कुम्भकमिति । वायव्याग्नेयनिर्गमं वेदिकम् चतुरश्रं समं कृत्वा नाभ्यष्टदिग्द्वारमुखमन्यत्पद्मकसंकाशं[3] सिंहाख्यमिति । यथेष्टायतैकरथ्याद्वारद्वययुतं दण्डकमिति । एतेषु सर्वेषु नाभिप्रोतं दण्डच्छेदं सूलछेदं न सारयेदिति विज्ञायते ॥

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे ग्रामाग्रहारविन्यासविधिः

[4]पञ्चदशोऽध्यायः ॥



## ॥ अथ षोडशोऽध्यायः ॥

सगर्भा पृथिवी सूते विगर्भा सर्वनाशिनी तस्मात्सर्वप्रयत्नेन गर्भं संस्थाप्यैव निवेशयेत् । गर्भन्यासः

पञ्चदशाधिकद्विशतपलं तदर्धं वा ताम्रमाहृत्याष्टाङ्गुलायतमष्टयमोच्छ्रयं षड्यवघनाधारं चतुर्यवघनभित्ति नवभागभ्यन्तरं कृत्वा द्व्यङ्गुलोच्छ्रयं तद्विस्तारसमं पिधानं न्यूनद्वियवं घनं त्वधोभित्त्याननं उभयसंश्लिष्टं चतुरश्रं खण्डस्फुटितवर्जितं गर्भभाजनं तदर्धं वैवं कृत्वोक्ततिथिवारर्क्षांशकलग्नेषु स्थिरराश्यंशके स्थिते चन्द्रे अनुकूलराशावुच्चगेषु शुभेक्षितेषु ग्रहेषु आयुर्ग्रहवर्जिते स्थिरराशौ शर्वर्यां गर्भं संस्थापयेत् । गर्भभाजनप्रमाणम् तत्रमुहूर्तविचारः

1. म. चतुर्थया. 2. म. रथपद्मं. 3. संकाशमित्यतः किंचित्रुटितमिव भाति. 4. ग. 30 खण्डः.

स्थापनादिवसात्पूर्वमङ्कुरानर्पयित्वा पूर्वेद्युरेव पूर्वाह्णे पञ्चगव्यैः फेलां प्रक्षाल्य जलेऽधिवास्य मण्डपे प्रपायां वाऽलङ्कृत्य धान्योपरि अण्डजाद्यास्तृते संस्थाप्याघोष्य वास्तुहोमं हुत्वा पुण्याहं प्रवाच्याऽऽशीर्वाग्भिः गद्यतालाद्यैः स्तुत्वाऽन्यैश्चाघोष्य

शान्तिहोमः पुनः धान्यराशौ प्रतिष्ठाप्य भगवन्तं ब्रह्मेश्वरावभ्यर्च्य दिक्षु दिक्पाल-कगजनागानभ्यर्च्य हवींषि सन्निवेद्य शान्तिं जुहुयात् ।

निनीय रात्रिशेषं पुनः प्रभाते धर्मात्मा स्नात्वा स्नानविधानेन स्नातं

आचार्यलक्षणम् सर्वलक्षणसम्पन्नं मनोवाक्कायकर्मभिर्निर्मलं सुपुष्टाङ्गं सुरूपसम्पन्नं विद्याधर्मविशारदं विष्णुभक्तिपुरस्सरं[1] वेदतत्त्वार्थदर्शिनं दैवपैतृकर्यो-र्निश्चलं पत्न्यपत्यसंयुतमदीनमानसमेकं स्थापकमानम्यालङ्कृत्य पृथिवी गर्भजननी स्थापको जनकः तस्मात्तत्प्रसादात्समृद्धिरिति ज्ञात्वा सम्यक् समारभेत् ।

दिवैव निर्मले द्रव्याणि भाजने क्षिप्त्वा रात्रावेव निधापयेत् । दिवा विनश्यति ।

गर्भभाजनमादाय नवाम्बरोपरि निधाय धूपदीपादिभिरलङ्कृत्य आत्मसूक्तं जप्त्वा

रात्रौनिधापनम् स्थापनप्रकारः प्रणम्य देवेशमनुज्ञाप्य श्रीसूक्तेन फेलामभिमृश्य फेलामध्यपदे माहेन्द्रमण्डलं पृथिव्यक्षरसमायुक्तं संस्थाप्योपरि परिवारणे लका-रान्तर्गतमादिबीजं संस्थाप्योङ्कारेणावेष्ट्याष्टशतं प्रणवमावर्त्य "तत्त्रीण्ये" त्येतिमन्त्रेण सामुद्रमृत्तिकां क्षिप्त्वा गजदन्तवल्मीकवृषविषाणकुलीरावासारामकेदारवननदीपर्वत-जातानां क्रमेणेन्द्रादीशानान्तं क्षिप्त्वा मध्ये मृणालकौमुदोत्पलकल्हारकशेरून् चतुर्दिक्षु प्लक्षोदुम्बराश्वत्थवटत्वचः कोणेषु च "इदं ब्रह्म" त्यर्पयित्वा सामुद्रनादेय-कौप्य ताटाक ह्राद सारस पाल्वलौपकुल्यतौषारोदकं क्रमेण "येतेश" तमित्यास्राव्य रत्नधातुबीजानि मन्त्रेण क्षिपेत् ।

दण्डकमण्डलुस्रुग्यज्ञभाण्डोपवीताद्दीनि विप्रवृद्धिनिमित्तान्यायुधध्वजादीनि क्षत्र-

होममन्त्राः वृद्धये तुलातोदादीनि वैश्यवृद्धये शूद्राणां हलादीन् सौवर्णमयान् मध्यपदे "गन्धद्वारा" मिति क्षिप्त्वा पूर्ववदाराध्यौपासनाग्नावाघारं हुत्वा । यद्दैवादीन् ब्राह्मं वैष्णवं रौद्रं लोकपालाधिदैवत्यमीङ्काराद्यन्तं हुत्वा विष्णवे वेधसे

रुद्रायादित्येभ्यः अश्विभ्यां वसुभ्यो [1]दिग्गजेभ्यः समुद्रेभ्यो द्वीपेभ्यो लोकेभ्यः सर्वभूतेभ्यः स्वाहेति व्याहृत्यन्तं हुत्वा गर्भरूपं निधापयेत् ।

[2]ह्लादम्लानमालानिर्वाणदीपपूर्णकुम्भरत्नगव्यमयानि वस्तूनि गर्भास्येषु कुम्भप्रदीपान् ग्रामाग्रहारयोः शेषान् नगर्यादीनां गव्यरत्नमयौ क्षेत्रारामतटाकोदवसितेषु बलाकादीन् तत्तद्रूपान् तत्तहाटकमयं यवमालं तदर्धं चतुरङ्गुलं वा कृत्वा "ब्रह्मजज्ञानं, इदं विष्णु"रिति जप्त्वा मध्यपदे निधापयेत् । तदुपरि रत्नानि क्षिप्त्वा पिधाय "विष्णुस्त्वां रक्षतु" इत्यभिमृश्य अहतवाससाआवेष्ट्य पुण्याहं स्वस्तिमृद्धिं च वाचयित्वाऽलङ्कृत्य निधाय प्रदोषे भूतयक्षपिशाचनागब्रह्मराक्षसयोगिनीढाकिनीप्रभृतीनां चतुष्पथचैत्यवृक्षश्मशानारामेषु गुहमातृशास्त्रादीनां स्थाने चरुलाजापूपसक्तुसमन्वितं माषमुद्गहरिद्रामिश्रितं पुष्पाद्भिः तत्तत्स्थाने बलिं क्षिप्त्वा रात्रावेव ध्रुवे लग्ने ब्रह्मस्थाने द्वारे महेन्द्रे ग्रहक्षते भल्लाटे पुष्पदन्ते वा विष्णुशिवस्कन्दानामालये वा ग्रामवृद्ध्यै स्थानमोहृत्य ललाटबाहुनाभिसमं तदर्धविस्तारं खनित्वा स्थलगर्भं पीठगर्भं व्यपोह्य पिशुननास्तिकजडामिलशठहैतुकादीन् विहाय यथा ते नैव जानीयुस्तथा कर्तव्यमिति ज्ञात्वा पञ्चगव्यैः प्रोक्ष्य मुहूर्ते समनुप्राप्ते ब्राह्मं वैष्णवं हुत्वा देवदेवं जगन्नाथं विष्णुं ध्यात्वा शुक्लमाल्यांबरधरः श्वेतानुलेपेनालङ्कृतः शुद्धाशयः तत्पात्रं "मेदिनी दे"वीति हस्ताभ्यामभिमन्त्र्य "नमो-वराहा"येत्युक्त्वाआत्मानं वराहरूपं वसुन्धरोद्धारं ध्यात्वा "इदं विष्णु"रिति तत्र गर्भं निधाय "देवीदं गर्भमाधत्स्वे"ति देवीं वसुन्धरां स्मृत्वा "मेदिनी दे"वीत्यादिभिर्मन्त्रैः पञ्चभिः सूक्तेन चाभिमन्त्र्य "आत्वाहार्ष"मिति स्थापयेत् । सुवर्णमेदिनीरत्नपशुधान्यादीन् दक्षिणां दत्वा अन्नाद्यदानं च स्वशक्तितः कृत्वा श्वेतपद्मबिसतन्तुकृतवर्तिकां द्व्यङ्गुलपरिणाहां षोडशाङ्गुलोज्ज्वलितप्रदीपिकां षोडशप्रस्थसंपूर्णघृतपात्रप्रतिष्ठितां सम्यग्विधाय गर्भस्य दक्षिणपार्श्वे श्रीसूक्तेन निधायाभ्यर्च्य सुदृढं सुस्थितं मृद्भिः सम्यक् प्रकल्प्यारभेत ।

ग्रामाग्रहारादीनां विशेषः

न्यासस्थानम्

रहसिस्थापनम्

[3]नगरादीनां देवागारे चैत्यवृक्षे द्वारवामे वा [4]बालानामभिवृद्ध्यर्थं वाहनायुधस्थाने वर्षवारिवृद्ध्यर्थं विद्युत्पर्जन्यरूपादीन् सुवर्णेन कृत्वा

कामनाभेदे

1. म. नागराजेभ्यः समुद्रेभ्यो लोकेभ्यः इत्यादि· 2. B. ह्लादंमालामाला. A. एतन्न दृश्यते. 3. A. नागराजादीनां. 4 म. बलिस्थानामभिवृध्यर्थं.

पञ्चगव्यैः मृण्मये वा भाण्डे निधाय तटाके सोमौषधिधान्यसमायुक्तं पञ्चगव्यं पञ्चरत्नं वा कैदारिके स्थापयेत् । रत्नबीजधातुसमायुक्तं गृहेषु स्थापयेत्[1] ।

एवं प्रतिष्ठिता भूमिर्धनधान्यसमृद्धिदा ।
सर्वसंपत्करा पुण्या सफला च भविष्यति ॥
विगर्भा च सशल्या च विनाशाय भविष्यति ॥

विशुद्धेन द्विजेनानुतापयुक्तेनैश्वर्यवृद्धेन स्थापितं गर्भमैहिकामुष्मिकशुभद मन्येन स्थापितं जारगर्भमिवोभयोः विनाशाय भवति । एवं ज्ञात्वा गर्भं प्रतिष्ठाप्य प्रवेशयेदिति विज्ञायते ॥

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे विमाननिर्णयविधानं नाम
[2] षोडशोऽध्यायः ॥



## ॥ अथ सप्तदशोऽध्यायः ॥

प्रागुदक्सप्तदशभिः सूत्रैः पदान्युपकल्प्य षट्पञ्चाशद्विशतभागेषु द्रौहिणं षोडशकं वेदाधिकाशीतिपदं दैविकं मानुषं षण्णवतिकं पैशाचं षष्टिरित्येवं ज्ञात्वा दैविकमानुषयोर्विप्राणां पैशाचे कर्मजीविनां ब्राह्मवायव्यैशान्यानलनीलेषु देवसभागोष्ठापणस्थानानि प्रकल्प्य ग्राममध्ये भगवन्तं विष्णुं जिष्णुं जगत्पतिं सर्वदेवमयं देवं परमात्मानं पञ्चमूर्तिविधानेनार्चयेत् । पश्चिमे वान्यत्र वा देवीभ्यामृषिभ्यां वीशशैषिकाभ्यां सहितं बेरं शैलजमुत्तमम् । वर्णयुक्तं ग्रामाभिमुखं संस्थाप्यार्चयेत् हरिदृष्टिः शुभदेति । ऐशान्यां बाह्ये तद्ग्रामपराङ्मुखं देवं हरं स्थापयेत् हरपृष्ठं शुभदमिति । इन्द्रेशानयोरन्तरे सूर्यमिन्द्राग्न्योर्मध्ये विघ्नं यमाग्न्योर्मध्ये दुर्गां नैर्ऋते शास्तारं वरुणवाय्वोरन्तरे स्कन्दं ग्रामाद्बहिरुदगीशानान्तरे ज्येष्ठामैशान्यां भद्रकालीं संस्थाप्यार्चयेत् । एषामर्चनया वा ग्रामशान्तिर्भवति । भगवन्तं विष्णुं विनाऽन्ये देवैर्मनुष्यैश्च न सेव्याः । ब्राह्मशमदमसत्यत्वादिसत्त्वगुणाः विष्णोरेव प्रसादात् । अतो ब्राह्मं तेजः तत्प्रसादाद्वर्धते । ततो

(Margin notes: ग्रामविन्यासः; हरिदृष्टिः; हरपृष्ठम्; सूर्यादिस्थानम्; विष्णुपूजन प्रशंसा)

1. ग. 31 अध्यायः. 2. 27 खण्डः.

ग्रामाग्रहारयोः पूज्यो भगवान् हरिः। अश्वरथनागायुधयोधानां [1]जयवीर्यादयो राजसगुणा रुद्रशवत्या प्रसिद्ध्यन्ति उग्ररूपत्वाद्धरस्य। अतो नगर्यादिषु हरः पूज्यः। विष्णुःसर्वत्र पूज्यः तत्पूजाविधानाद्धर्मसिद्धिर्भवति। वर्णाश्रमधर्माश्रयाः श्रुतिधर्माश्च विष्णुप्रसादात्सिद्ध्यन्ति। अतस्तद्ग्रामवासिनां यजमानस्य राष्ट्रस्य च सामान्यमग्निहोत्रम्। तदाराधनं विप्रवरैर्नित्यं कर्तव्यम्। तस्मात्सेवितव्यो भगवानिष्टापूर्ताभिवृद्धये। विष्ण्वाराधनान्विते देशे देवर्षिपितृगणास्सर्वे पूजिता भवन्ति। अपूजिते तस्मिन् पूजिता अप्यपूजिता एव। विष्णुपूजाविहीने देशे विप्रो न जात्वपि वसेत् तत्र तामसस्वभावत्वात्। तस्मात् ग्रामान्तरे देवं संस्थाप्य महतीं पूजां वैखानसेन विधानेनैव कारयेत् सौम्यत्वाद्भुक्तिमुक्तिफलप्रदत्वाच्च तद्विदः। हरार्चन प्रशंसा

तत्पूजकानां तत्पार्श्वे स्थानं तस्यैशान्ये सभास्थानमाग्नेय्यां गोष्ठागारं नैर्ऋत्यामापणं पैशाचभागे प्राच्यां कुलालनापिताम्बष्ठादीनां याम्ये तन्तुवायचक्रिणां वारुणे क्रयविक्रयकारिणां वणिजां सौम्ये द्विजभृत्यानां वादित्रजीविनां चाग्नेय्यां क्रोशमात्रे तक्षादीनां नैर्ऋते गव्यूतिमात्रे [2]चण्डालवर्गाणां वायव्ये मृगव्याधशाकुनिकादीनां पैशाचाद्बाह्यतः प्राकारपरिघा परिघायाः परितो धनुश्शतं तदर्धमर्धं कूपारामतटाक[3]वाप्यादयस्तत्र भवन्ति। ऐशान्ये नदीतीरे वा श्मशानं ग्रामायामसमं दूरे वारुण्यां तटाकं त्रिदण्डसहस्रं तदर्धप्रमाणं वा सेतुबन्धं दृढतरमत्युन्नतमनवच्छेद्यं कारयेत्। तत्र [4]निर्झरोपकुल्यामहाकुल्यादि जलयन्त्राणि सम्यक् संकल्पयेत्। तत्पार्श्वतः [5]सर्वसमसलिलक्षेत्रं केदारं समभागमुपकल्प्य एवं बहूदकमल्पायासकृतरक्षकमशोष्यमनवाह्यमप्रबाध्यं जलाशयं यत्नतः कारयेत् जलमूलत्वात्सर्वजन्तूनां प्रवर्तनस्य। तस्मात्सर्वप्रयत्नेनाधारोपरिष्टात् बहुलजलमेवं कुर्यात्। न्यग्रोधोदुम्बराश्वत्थप्लक्षान् प्रागादिषु चैत्यवृक्षान् प्ररोहयेत्। [6]तत्स्पृष्टानिलप्रवेशात्समृद्धिर्भवति। अन्यथा न समृद्धिः। वारुणश्लेष्मातकनिम्बशाल्मलीनाग्नेयादिषु कोणेषु प्ररोहयेत्। शाल्मलिकिंशुककार्पासक्षीरिकण्टकिवृक्षान् ग्रामाभ्यन्तरे न प्ररोहयेत् शून्यत्वात्तेषाम्।

परिजनस्थानानि — कुलालादीनां स्थानम्. — परिघादीनां-स्थानम् — तटाकम्- — आरामवृक्षाः

---

1. A. जयवीर्यानन्दादयः. 2. A चण्डालपक्कणम्. 3. M मठादयः. 4. B. तत्र बद्धारोहणमार्गं कुर्यात्. इत्यधिकं. 5. A सर्वसमय. 6. M तन्मृष्टानिल.

स्कन्दमिन्दिरां[1] च विघ्नं भगवन्तं विना देवमानुषयोर्भागे न संस्थाप्यः । देवतासामान्यछाया शुभदा । एवं विमानानि परिकल्प्य विप्राणामावसथानि विधिना मनोरमाणि शुभ्राणि सपरिच्छदानि पृथक् पृथक् कल्पयित्वा बिम्बानि देवदेवस्य तेषु संस्थाप्य द्विजेभ्यो वेदपारगेभ्यो विष्णुभक्तियुक्तेभ्यो दद्यात् । एवं बहुजलसंपन्नं[2]ससारारामकैदारिकं संपन्नभृत्यसंकीर्णमनुपद्रवमव्याधिजनकमदस्युपरिपन्थिजनसंपन्नं समृद्धं ग्रामं कृत्वा नृपो ददद्यात् । [3]अकृतोदकमनरण्यमपरिग्रहमकृष्टफालमेव कल्पयित्वा साधुजनगृहीतं वा विप्रेभ्यः शक्तितो ददद्यादतिभक्तिपुरस्सरम् । सर्वपापविनिर्मुक्तः स विष्णुलोकं गत्वा विष्णुसायुज्यमाप्नुयात् ।

गृहकल्पनम्
गृहदानम्
ग्रामदानम्

सुरविप्रक्षेत्रं गोष्पदं वापि यो हन्यात् त्रिसप्तनरकान् घोरान् गत्वा भूयस्तिरश्चां गतिसहस्रमवाप्नुयात् । तस्मात्सर्वप्रयत्नेन विषवह्निसमं राजा सुरब्राह्मणदत्तं परिहरेदिति विज्ञायते ॥

दत्तापहारनिन्दा

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे सर्वावासविधिर्नाम
[4] सप्तदशोऽध्यायः ॥



## ॥ अथाष्टादशोऽध्यायः ॥

अथातो गृहवास्तुविधानं व्याख्यास्यामः । गृहं हि प्राणिनां मूलं [5]देहो मूलं शरीरिणाम् । विना देहं न कार्याणि । अतः सर्वकार्थपरं संपच्छुभोदयं विधियुतम् । विहीनविधिके वास्तुन्यसुरादयो वसन्ति । ऐहिकामुष्मिककर्माण्यस्य न सिध्यन्ति । सम्यक् परीक्ष्यैवोपकल्प्य देवावासं समूर्तामूर्तविधानेनानुदिनमाराध्योर्ध्वगतिं साधयेत् ।

वास्तुप्रशंसा

माघप्रोष्ठपदाषाढमार्गशीर्षान् ज्ञशुक्रास्तमयं च हित्वा रोहिण्यादित्यतिष्यानलवायव्योत्तरहस्तपैतृक श्रवणनैर्ऋतमैत्रवैश्वदेवाहिर्बुध्न्याश्वयुग्वासववारुणानि क्रमेणर्क्षचतुष्काणि प्रागादुद्यत्तरान्तं स्थानदिग्गतभागेषु पूर्वोक्ततिथिवारेषु गुरुकाव्यसौम्योदये गृह्य ऊर्ध्वाननहोरायां द्वात्रिंशद्दण्डमानेन

कर्षणे
मुहूर्तविचारः

---

1. M. चन्द्रं इत्येव. 2. M. ससादाराम. 3. M. अमृतोदकं. 4 ग. त्रयस्त्रिंशः खण्डः. 5, M. देहं.

हस्तमानेन वा यथालाभं प्रागुत्तरैशान्यायतां चतुष्पार्श्वे ओजसंख्यां चतुरश्रां समां पूर्वोक्तगुणसंपन्नां भूमिमाहृत्य तृणगुल्मलतादीनपोह्योक्तहलादिना कर्षयित्वा त्र्यंशं षोडशांशं[1] वोद्यानार्थं गृहीत्वा कर्त्रायामाष्टत्रिहस्तं [2]तद्धस्तेनौजमाहृत्य विस्ताराहतायामं त्रिगुणीकृत्य वसुभिर्हृत्वा लब्धेषु ध्वजादिषु शुभयोगे वा आरभेत । [3]ध्वजेऽर्थवृद्धिः अजस्रपूजा धूमे हानिर्दुःखं व्याधिभयं सिंहे राजामात्यपुरोहितादीनां पूजा श्वाने कुलानपत्यत्वं वृषे धनधान्यापत्यवृद्धिः खरे दारानाचारत्वं गजेऽप्यैश्वर्यं ध्वांक्षे प्रेष्यप्रवृत्त्यादयः । तस्माद्ध्वजसिंहवृषभनागान्यतममाहृत्य सप्तारत्निमात्रं जलान्तं शिलान्तं घनान्तं वा खनित्वा मृदं व्यपोह्य सिकताभिः [4]शौचदृढाभिः मृद्भिश्चापूर्यैभपादैर्मुसलैश्च समं दृढतरमुपकल्प्य संवत्सरं तदर्धं त्रिमासं मासं वा तूष्णीं निधाय कालक्रमेण शालामारभेत ।

आयादिविचारः

पुरुषं वास्तुनः [5]प्रागुत्तराङ्गमुत्तानाननं ज्ञात्वा मर्माणि परिहृत्य कल्पयेत् ।

प्रागुदग्दशभिः सूत्रैर्भूमिं विभज्यैकाशीतिपदकल्पितशरीरे क्रमादीशानपर्जन्यजयन्तेन्द्रादित्यसत्यान्तरिक्षभृशाः प्रत्यङ्मुखाश्च अग्निपूषवितथगृहक्षतयमगन्धर्वभृङ्गराज ऋषय इत्येते [6]दक्षिणस्यामुदङ्मुखाः निर्ऋतिदौवारिकसुग्रीवपुष्पदन्तवरुणासुरशोषरोगाश्चेति प्राङ्मुखाः वायुनागमुख्यभल्लाटसोमार्गलादितिसूरिदेवा [7]दक्षिणास्या उदीचीनस्थाश्चैकपदभोजिनः द्वात्रिंशद्देवता भवन्ति । अर्यमा दण्डधरः पाशभृद्धनदः प्रागादिक्रमेण षट्पदिकाः । सवितृसावित्राविन्द्रेन्द्राजौ रुद्ररुद्राजावप आपवत्सावित्येते आग्नेयादिषु कोणेषु द्विपदभोजिनः । तद्बाह्ये चरकी देवतारिः पूतना पापराक्षसी इत्येताश्चतस्रः कोणेषु द्विपदभोजिनः पिशाचाख्या भवन्ति । एतेषां मध्ये ब्राह्मं पदमेकं परितः प्रागादीशानपर्यन्तं भृग्वङ्गिरोत्रिपुलहपुलस्त्यक्रतुमरीचिवसिष्ठानामित्येवं वास्त्वङ्गानि परिज्ञाय तिष्ठन्ति ।

वास्तुपदकल्पनम्.

अजे वृषे सूर्ये प्राक्प्रतीचीमुखीं सिंहे कुलीरे वा उदग्दक्षिणामुखीं परिहृत्य मीने च मिथुने सूर्ये सर्वमुखीमादित्याभिमुखमेवारभेत । प्राक्शालं यदि कुर्याद्भल्लाटे प्रथममेष्टकां पुष्पदन्ते द्वारं पर्जन्यदेशे जलमार्गं

वास्तुविधौ शालाभेदाः

---

1. A दानयूनमर्धं गृहीत्वा 2. A तद्धस्तेनार्धमाहृत्य. 3. M गजेऽर्थसम्पत्.
4. M. शौचन्द्र (?) दृढरूपभिः. 5. M प्रागुत्तमाङ्गं. 6. B दक्षिणस्यामितिनास्ति.
7. B दक्षिणास्या इति नास्ति.

महेन्द्रसूर्यार्यमदेशे पर्यङ्कमन्तरिक्षे महानसमिन्द्रेन्द्राजस्थाने भोजनं गन्धर्वासुरदेशे वर्चःस्थानं वारुणसौम्ये कूपम्। याम्यायां यदि चेन्महेन्द्रे प्रथमेष्टकां भल्लाटे द्वारं पर्जन्ये वारिमार्गं गन्धर्वसुग्रीवे शयनं नागे वर्चःस्थानं भोजनमहानसकूपजलमार्गाणां पूर्ववत्। वारुण्यां यदि भवेद् गृहक्षते प्रथमेष्टकां महेन्द्रे द्वारमीशे पचनागारं सुग्रीववरुणे शयनमन्यत्पूर्ववत्। उदीच्यां यदि भवेत्पुष्पदन्ते प्रथमेष्टकां गृहक्षते द्वारमन्यत्समम्। सर्वत्र प्रतिवंशं शयनं गृहस्य दक्षिणनयनालोकं विदिक्षु देवतागारं तत्प्रमुखे अग्न्यगारमगाराभिमुखं भृत्यानामतिथीनां दक्षिणतो नैरृत्यामुत्करस्थानं पृष्ठतो विद्यास्थानं तत्रैव। एतद्ब्राह्मणानाम्।

नृपाणां पुरस्य मध्ये पश्चिमे वा परिघाप्राकरयन्त्राट्टालकशोभितं चतुर्द्वारयुतं बहूपह्वरदुर्गारण्याढ्यमुदक्पश्चिमोद्धृतमन्यूनपक्लृप्ताभिषेकमण्डपं[1] याम्यैकप्राग्विस्तृताङ्कणं हर्म्यप्रासादसंबाधं प्राङ्मुखमेवातिरम्यं विधिना कल्पयेत्। प्राच्यामायुधागारमाग्नेय्यां गोष्ठागारं याम्यायां भोजनस्थानं नैरृत्यां धनसङ्गृहं प्रतीच्यामन्तःपुरं सौम्यायामाथर्वणस्थानं वायव्यां रक्षिणामरूशस्त्राणामैशान्यां याम्यायां वारुणस्थानं वारुण्यां क्रीडास्थानं वायव्यां तुरगस्थानं वापीकूपतटाकानामैशान्यामङ्कणेऽभिमुखमार्यास्थानं पार्श्वे हेतिमुख्यागारं(?) तद्दक्षिणेऽधिकारानियुक्तानामाग्नेय्यां महानसम्। एवं त्रिप्राकारयुतं सुदृढं परिकल्प्य तदभिमुखमंगनावाटं प्राच्यां [2]तदर्धासनं सर्वतः सैनिकानाम्॥

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे गृहवास्तुविधानं नामाष्टादशोऽध्यायः[3]॥

## ॥ अथैकोनविंशोऽध्यायः ॥

गृहवास्तुविधानम्.

वैश्यानां क्रयविक्रयागारं प्रत्यङ्मुखे दक्षिणे भोजनस्थानं बाह्ये दक्षिणे गोधनस्थानं तत्पश्चिमे महिषाणामन्यद्विप्रसमम्। शूद्राणां प्रमुखे कर्षद्रव्यपरिग्रहमैशान्यामतिथिस्थानमन्यद्वैश्यसमम्। सर्वेषां नैरृते अरिष्टभल्लातकनिम्बकल्पितं सूतिगृहम्। ऐशान्येन्द्रादित्ययमाग्नेयनैरृतानामन्यतमस्थापितं गर्भागारं भोगैश्वर्यप्रदं गृहक्षतयमगन्धर्वान्यतमे धनधान्यविवृद्धिदमसुरपुष्पदन्तभल्लाटवारुणे भोगैश्वर्ययुतम्। अधन्यमतिसंक्षिप्तमतिविस्तीर्णमर्थदम्। द्विहस्तादि द्विगु-

1. M याम्ये गृहं. 2. B धर्ममानसं सर्वत्रैतन्नियतमिति. 3. ग. चतुस्त्रिंशःखण्डः.

गोच्छ्रयमत्युच्छ्रितमतिनीचगोपिघटितपार्श्वं चातिशोकावहम् । वंशानुचरणं वंशानुगत-द्वारमुपर्यनुगतद्वारं द्वारास्रावजलमार्गमसमाननिन्दितानुक्तद्रुमकल्पितं च नाचरेत् । सूत्रानुगतं प्रतिवंशमोजं स्थूणमुपकल्प्य ब्राह्मं नवपदं परिहृत्य [1]सूत्रानुगतभित्तिकं चतुश्शालं त्रैशालं द्विशालं वैतल्लक्षणसम्पन्नं गर्भयुतं प्रकल्प्योक्तदेशे देवागारमुपर्यनुगतमुन्नतं रम्यं मनोरमं शुद्धं कृत्वा तस्मिन् पीठानि परिकल्प्य मध्ये देवीभ्यामृषिभ्यां देवेशं सर्वजगद्बीजं [2]विष्णुं सर्वदेवमयं सर्वार्थसाधकं भगवन्तं प्रतिष्ठाप्य तस्योत्तरपार्श्वे ब्रह्माणं सावित्र्या सार्धं तदुत्तरे गुहवक्रतुण्डौ देवस्य दक्षिणे पार्श्वे दुर्गां सरस्वती-मुमामिन्द्रं शशिनं सूर्यं च संस्थाप्य त्रिकालं द्विकालमेककालं वाऽर्चयेत् । एते च पूजिता यस्य सद्मन्यत्रैव सर्वकल्याणसम्पत् ।

एतेष्वपि द्विजो नित्यं विष्णुं भगवन्तं ब्रह्माणं रविं स्कन्दं सरस्वतीं वार्चयेत् । क्षत्रियस्त्वार्यां विघ्नं रविं विष्णुं रुद्रम् । वैश्यः कुबेरं दुर्गां श्रियं सरस्वतीं च । शूद्रश्च द्विजं नित्यं विष्णुं भगवन्तं चन्द्रमिन्द्रं विनायकं यत्नतः पूजयेत् । तस्मात्सर्व-प्रयत्नेन देवीभ्यां सार्धं विष्णुं भगवन्तं सुवर्णरजितताम्राणामन्यतमेन षडङ्गुलादहीन-मुपकल्प्य यथाविभवमाराध्य तत्प्रमुखेऽग्निं विधानेन हुत्वैवाश्नीयात् । अन्यथा[3] आत्मघाती भवति । विष्णुपूजाविहीनं यद्वेश्म[4]तत्पक्कणैःसमम् । तद्विप्रमुख्यैर्न प्रवेश्यम् । तदधिपेन नासितव्यं न संभाष्यम् । तस्माद्देवं प्रतिष्ठाप्याराधये-देति विज्ञायते ॥

आराधनप्रशंसा

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे चतुर्वर्णसमाराधनयोग्यदेवतानिर्णयो नामै-[5]कोनविंशोऽध्यायः ॥



## ॥ अथ विंशोऽध्यायः ॥

अथ विमानविधानं व्याख्यास्यामः । विमानमित्यत्र विष्णोः । तद्विमानार्चना पुण्या सर्वक्रतुफलप्रदा सार्वजन्या चिरस्थायिनी । विष्णुपूजां विना वेदाः शास्त्राण्याचारसम्पदः शुभदा न भवन्ति यथा आदित्यं [6] विना लोका न मनोहिता यथेन्द्रियाण्यकर्मण्यतां यान्ति । अतः सर्वप्रयत्नेनेन्दिरेशस्य मन्दिरं सुन्दरं

विमानार्चना-विधिः

1. B तत्रानुगत. 2. B विष्णुमितिनास्ति. 3. B आमघाति. 4. क. तत्पितृवनैः क्कणैः 5. ग. पंचत्रिंशः खण्डः. 6. मं. लोकामितोर्हीनानि यथेन्द्रियाणि.

कैंकर्यमहिमा

कृत्वा भगवन्तं प्रतिष्ठाप्य परात्परं तल्लोकमवाप्नुयाद्वैष्णवं पदम् । 'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरय' इति । विष्णोर्मन्दिरमित्युक्त्वा बालुकैर्वालुकाकल्पितमप्यघौघनाशकृत् । किं पुनर्विधिनेष्टकादिकृतम् ? तपोभिः कर्मभिः पुण्यैर्वान्यैऽर्नाप्नुयाद्वैष्णवं पदम् । भक्त्यैव निनयेन्नान्यैः ।

भक्तिमहिमा

भक्तिरेव परा पुण्या भक्तिरेव शुभप्रदा तृष्णावैतरणीयानं संवर्तकातिवृष्टिरक्षा कामहालाहलाग्न्यमृतधारा संकल्पबीजहा देहबन्धमोक्षप्रदायिनी संकल्पकण्टकाविद्धविशल्यकरणी योगध्र्यङ्कुरवर्धन्यसिक्रकचच्छेद-रोपसञ्जीवनी दुःखलयजालभेदिनी सुखचिन्तामणिप्रदास्तर्तॄणां भक्तिरेवं परिज्ञाया-

संसृतिदोषः

नित्यसुखमस्वस्थं जलबुद्बुदनिस्सारं रोगदुःखाकरं पूत्यमेध्यविनिर्मितमाशापाशशतैर्बद्धं तृष्णांशुसमुज्ज्वलमेतद्देहं क्षणाद्धित्वा सर्वसिद्धिफलप्रदं सर्वदेवैरभिष्टुतं सर्वयोगिभिरर्चितं सर्ववेदार्थवेदितं परात्परतरं पुण्यं वैष्णवं पदं प्राप्नुयादिति सञ्चिन्त्य विधिदृष्टविधानेन शक्तितः कर्तुमारभेत ।

फलश्रुतिः

सङ्कल्पमात्रादेव दशपूर्वान् दशापरानात्मानं च नयेल्लोकाञ्छुभान् । देवनिर्मितं देशं परीक्ष्य तल्लोकान् स जयिष्यति । अतः कर्षिते क्षेत्रे ब्रह्मलोकं ब्रह्मपद्मे कृते विष्णुलोकं स्थापिते शैषिके विष्णोः सामीप्यं देवबिम्बे कृते तत्र भूर्ग्वत्रिसदृशं पदं मन्दिरे कल्पितेपि सालोक्यं वंशजा यान्ति तत्रैव विमाने समाप्ते सारूप्यं देवरूपे कृते बेरे तद्वंशजाताः सारूप्यं बिम्बे प्रतिष्ठिते सम्यग्विधिना तद्वंशजातानां पत्नीनां कुलजाः मातृवंशजाः भृत्यवंशभवाश्च विष्णुरूपधराः सौम्यास्सर्वे भवन्ति । समाप्ते वैष्णवयागे भोगैश्वर्यं प्रतिष्ठिते त्यक्त्वा कलेबरं सद्यः शङ्खचक्रधरः श्यामलाङ्गश्चतुर्भुजः श्रीवत्सवक्षाः भूत्वा वैनतेयभुजमारूढः सर्वदेवनमस्कृतः सर्वान् लोकानतीत्यासौ विष्णोः सायुज्यमाप्नुयात् । अन्यलोकगताः सर्वे पुनरावर्तिनः विष्णुलोकगतानां नास्त्यावृत्तिः । विमानमहाबेरकौतुकबिम्बस्थापननवकर्मकर्तारः पञ्चैते विष्णुरूपधरा विष्णुलोके प्रतिष्ठिताः तेषां चाप्यधिक पुण्यवान् भोगदाता भवति । स्थण्डिले वा जले [1]वाप्याशये वा ध्यात्वा देवं [2]नमस्कृत्योक्तमार्गेण सर्वपाप-विनिर्मुक्तो विष्णुलोकं स गच्छति । किं पुनर्मन्दिरं कृत्वा शाश्वतपूजाकर्तॄणाम् । पुण्या भक्तिः । तस्मादेवं विदित्वा लोकक्षयोद्भवपुण्यपापफलाधारसुखदुःखप्रवर्तनं पत्न्यपत्यधना-

---

1. M वायव्ये शये· 2· M नम इत्युक्तिमात्रेण·

दीनामसारतां च परिज्ञाय ऐहिकामुष्मिकविज्ञानहेतुकमनश्वरमप्रभेद्यमनादिमध्यान्तमार्षं शाब्दं प्रमाणमालम्ब्य तत्सारभूतं सर्वार्थसाधकं भुक्तिमुक्तिफलप्रदमप्रतर्क्यमनवद्यमघौघघ्नं वैखानसमिदं शास्त्रमिति ज्ञात्वा अन्योन्यापाकृतिहेतुदूषितानुमितानयथार्थानल्पश्रुतिविजृम्भितानदृष्टानदृष्टज्ञानप्यविचारपेशलांस्तर्कानपोह्य श्रद्धाभक्ती पुरस्कृत्य वैखानसशास्त्रसिद्धं यथाशक्त्यारभेतेति विज्ञायते ॥

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे अर्चनप्रशंसनं नाम
[1] विंशोऽध्यायः ॥



## ॥ अथैकविंशोऽध्यायः ॥

एवं मनसि सञ्जाते विष्णोर्विमानं चिकीर्षुरारुरुक्षुः पदं विष्णोर्वैखानसविदः शिष्टान् वेदतत्त्वार्थदर्शिनः सौम्यान् जितेन्द्रियान् शुद्धान् विष्ण्वाकारधरानात्मारामान् ज्ञानामृतानन्दहृदयानूहापोहविधानेन ध्वस्तसंशयमानसान् ध्यानयुक्तान् ब्रह्मरत्नमयान् विप्रान् देववन्नमस्कृत्यानुज्ञाप्याहूय "यूयं भक्त्या हरेर्विमानं कर्तुमारभध्वं युष्मदङ्घ्रिरजोरक्षितोहं[2] मत्प्रेरितां पूजामाहृत्यानुमान्यास्मिन्कर्मणि[3]पुण्यर्धिं भावय" तेष्युक्त्वा तैरोमित्युक्तः तेष्वेकं गुरुं[4]वृत्वा[5]पूजयित्वा[6]तेषां सर्वेषां शक्तितो दक्षिणां दत्वा विप्रानन्यांश्च संभोज्य स्वार्थं त्रिभागं कृत्वैकं कुटुम्बभरणार्थमाहृत्य द्विभागं दत्वा तेनैव विधानेन[7]विमानमुपकल्प्य तस्य दक्षिणपार्श्वे आचार्यसदनं परिकल्पयेत् । गुरुर्विष्णुपरायणस्सद्मन्यावसेत् । आचार्यलक्षणम् आचार्यवरणम्

अशक्तश्चेत्स्वयं समापयितुं राज्ञा आढ्यैर्ग्राममुख्यैस्सर्ववणिग्भिरनुलोमैश्च कारयेत् । तस्मात्पुण्ये शुभर्क्षेऽनुकूले [8]तद्विभवानुरूपमाराधकपरिचारकान् सङ्गृह्य यथालाभं पायसादिभिर्भोजयित्वा शक्तितो दक्षिणां दत्वाऽऽरभेत। आलयस्वाम्यम्
शूद्रं वा अनुलोमं वा [9]विष्णुभक्तियुतं समाहूय ग्रामनगरपत्तनादिषु सरित्समुद्रतीरे पर्वतपार्श्वे[10]राष्ट्रमध्ये वा परीक्ष्य विधिना भूमिं शुचौ देशे कारयेद्विमानम् । तत्र द्रुमगुल्म-

1. ग· षट्त्रिंशः खण्डः· 2. B रज उक्षितः· 3. A पुण्यदातारो भावयत· 4. B आहूय· 5. M भोजयित्वा· 6. B तेषां सर्वेषामित्यत्र वृतान्सर्वानिति· 7. B विधानेनेति लुप्यते· 8. M तद्विभवानुकूलमर्चकपरिचारकानाहूयाभिपूज्य· 9. M विष्णुभक्तः शूद्रोऽनुलोमो वा यजमानश्चेत् गुरुस्तं समाहूय प्रोक्ष्य वैष्णवं कारयित्वा· 10. M ग्राममध्ये,

भूमिशुद्धिप्रकारः

लतादीनपोह्य बहुशः कर्षणं कृत्वा शोधयेत् । गोभिराक्रमणाद्दाहनात्खननादुपलेपनात्पूरणाद्वर्षधाराभिर्भूमेः शौचमित्येवं यथालाभं क्रमेण कारयेत् । तत्र बहुशस्तूष्णीं कर्षयित्वा बीजानुप्त्वा [1]पुरतस्तत्क्रममार्गेण भोगैश्वर्यवशादर्चनस्नपनोत्सवबल्यर्थमेतावद्धविषामर्थमेतावत्पुष्पगन्धानुलेपनदीपार्थमेतावद्विष्णुपञ्चदिनपूजार्थमर्चनादक्षिणार्थमेतावच्छुश्रूषाकारिणामेतावद्वादित्रजीविनां भक्तानामतिथीनामेतावत् [2]शिष्याणामध्येतॄणामेतावदप्सरसां गायकनर्तकवादकानां विपञ्चीरववादिनां मर्दलकानामेतावत् खण्डस्फुटितनिवृत्त्यर्थं नवकर्मक्रियां प्रत्युपकारिणां दानार्थमेतावदिति निश्चित्य तं सर्वं पूर्ववत्ताम्रपात्रेऽर्पयित्वा सीमाविनिर्णयं कृत्वा आचार्यमर्चकं वा वस्त्राङ्गुलीयककुण्डलादिभिरलङ्कृत्य तद्धस्ते [3]सोदकं दद्यात् । एतत्सर्वेषामेव भवति । एवं कर्तुमशक्तश्चेद्विमानदेशमात्रं दद्यात् । पश्चात्सर्वसमृद्धिर[4]पितस्यैव भवेत् । नगरादिषु पश्चिमे प्राङ्मुखं विमानं सङ्कल्प्याप्सरोभिः प्रकल्पयेत् । विविक्तग्रामपुण्यदेशेषु ताभिस्सार्धं न कारयेत् ।

सामृतहारककल्पनम्

पूर्वमेव सुपर्याप्तं भोगं कृत्वा बालागारे भगवन्तं प्रतिष्ठाप्यारम्भणं यत्तत्सामृतम् । बालागारं विना विमानमात्रमेव स्वार्थैः याच्ञालब्धार्थैश्च कृत्वा बेरादीन् प्रकल्पयेत्तद्धारकमित्येतयोरेकमालम्ब्यारभेत । राज्ञां राजसमानां द्विजानाममात्यानां सामृतमेव नान्यथा कार्यम् । यदि कुर्यात् कर्तुर्मृत्युर्भवति । अशक्तानां दरिद्राणां भक्तिमात्रसाधनानां हारकम् । तस्मात्पूर्वमेवोपकल्प्य भूमिशुद्धिकर्षणानन्तरं बालागारं प्रकल्प्य खनित्वाऽऽपूर्यारभेतेति विज्ञायते ।

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे धारादानविधिर्नामै-
[5] कविंशोऽध्यायः ॥



## ॥ अथ द्वाविंशोऽध्यायः ॥

कर्षणम्

अथ तद्देशशुद्धिकर्षणलक्षणं व्याख्यास्यामः। कर्षणार्थं युगलाङ्गलादीन् क्रमेणाहरेत् । खदिरासनचम्पकशिरीषभवाः लाङ्गलाः क्रमेण वर्णानां

1. B तत्रः. 2. A ग्रन्थव्याख्यातॄणामेतावद्गणिकानामेतावत्. 3. A सम्पूर्णकलशधारया. 4. घ कोशे इतः आरभ्यपञ्चविंशेतिपत्राणि गलितानि. 5. ग. सप्तविंशःखण्डः-

वेणुचम्पकपुन्नागबर्बरजा युगाश्च । शुभर्क्षे वृक्षमाराध्य भूतबलिमुपकल्प्य सायं [1]"अस्मिन् वृक्षे स्थिता यूयं" इत्युक्त्वा प्रदक्षिणं कृत्वा प्रभाते सौम्यहोरायां छेदयित्वा [2]पञ्चतालायामं हलं द्वादशतालायतं क्षिणियं नवतालायतं युगं चतुस्तालायामम्मृषिमाहृत्य सुवर्णरजितताम्रायसानामन्यतमेनर्त्विगङ्गुलायामं फालमाकल्प्य आकृतिवशाद्विष्कम्भनाहादीन् समुपकल्प्य लक्षणयुतानाहृत्य प्राच्यामुदीच्यां वा प्रपायां संस्थाप्य श्वेतरक्तहरितासितान् वर्णक्रमेण [3]सौम्यवर्णवीर्यबलोपेतौ यवसोदकपुष्टाङ्गौ साण्डौ खुरसंस्पर्शिलाङ्गूलौ समखुरशृङ्गावहीनाङ्गौ बलीवर्दावाहृत्य पूर्वेद्युरेव पूर्वाह्णे गन्धोदकैः संस्नाप्यालंकृत्य गोसूक्तेनाभिमृश्य मृष्टयवसतृणजलादीन् निवेद्य [4]प्रोक्षयित्वा प्रतिसरं बध्वा कर्षकमलङ्कृत्य रात्रावेव निशीथे यक्षराक्षसपिशाचेभ्यो माषापूपसक्तुलाजसमन्वितं बलिमुक्तप्रदेशे परितः क्षिप्त्वा [5]ओषधिभिः शालियवमाषगोधूमपिष्टं केदारोदकमधुपयोभिरपूपलाजचरुभिः क्रमेण नागेभ्यो बलिं दत्वा प्रभाते स्नात्वा स्नानविधानेन युगलाङ्गलादीन् पञ्चगव्यैः क्षीरेण गन्धोदकेन वा विष्णुगायत्र्या प्रक्षाल्य संस्थाप्य युगे शेषं सीतायां मेदिनीं देवीं फाले ज्येष्ठामृषौ वायुं क्षिणिये इन्द्रं रज्जुबन्धे अपां पतिं प्रतोदे यमं [6]पूर्वाद्यपरान्तं प्राङ्मुखो भूत्वा अर्घ्यान्तमभ्यर्च्य तेभ्यो हुत्वा शालिव्रीहियवमुद्गतिलमाषप्रियङ्गुगोधूमचणकतिलतिल्वमसूरातसीकुलुत्थसर्षपश्यामाकषाष्टिकनिष्पावा इत्येते सप्तदशधान्या भवन्ति । एतान् संशोध्य संशुद्धान् प्रोक्ष्य सोमसभ्यर्च्य बलिं दद्यात् । बलीवर्दौ रूप्यशृङ्गखुराववस्थाप्याभिमृश्याभ्यर्च्य क्षीरेण खुरान् प्रक्षाल्य पायसतण्डुलान् दत्वा प्रोक्षणैः प्रोक्ष्य प्राच्यां देवं समभ्यर्च्य प्रमुखे वीशं दक्षिणे चक्रं वामे हरं संस्थाप्य सप्तविंशतिविग्रहैरभ्यर्च्य 'सर्वजित्सर्वशत्रुघ्न' इत्यनपायिनं 'वैनतेयो महावीर्य' इति वीशं 'आयातु भगवान् दिव्य' इत्यमितमावाह्याभ्यर्च्य पुण्याहं स्वस्तिमृद्धिं च वाचयित्वा कर्षकमलङ्कृत्य रूपयौवनसम्पन्नां कन्यामेकां वर्णजामलङ्कृत्य पद्मदीपकरां हंसगामिनीं पुरस्कृत्य ततादद्यैरारोप्य अष्टमङ्गलधूपदीपध्वजपिञ्छातपत्रचामरादिभिरग्रे अनपायिनं मध्ये वीशं पृष्ठे अमितं

युगलाङ्गलादिलक्षणम्

सप्तदशधान्यानि

1. A येऽस्मिन् वृक्षे स्थिता यूयं शेषादीन् प्रणमाम्यहं. 2. M पञ्चयमायामं हलं द्वादशायतं क्षिणियं चतुर्यमायाममृषिमाहृत्य. 3. M सौम्यौ. 4. A पोषयित्वा. 5. B. ओषधिशालिमाषयवगोधूमैः. 6. M पूर्वान्तमपरान्तम्.

रथगजतुरगशिबिकानामन्यतमैः सन्नयेत् । कनिक्रदादीन् जप्त्वा पृष्ठतस्तेषामृत्विजः शनैः शकुनान्युपलक्ष्य गच्छेयुः ।

सीमानिर्णय प्रकारः

तत्र गत्वा चक्रवीशशैषिकान् सन्न्यस्य वारुणान्तं सीमानिर्णयं कृत्वा तत्र बलीवर्दावभिमृश्य देवं नमस्कृत्य आचार्यः कर्षकं "अक्षैर्मादीव्य" इति त्रिः प्रोक्षयेत् । कर्षकस्तमभिवन्द्य युगमादाय "त्वं वृ"षेति दक्षिणं "सौरभे" येति वामं त्रिवृतकुशरज्ज्वा बलीवर्दं संयोज्य बद्ध्वा "युगं युगशृङ्ग"मिति लाङ्गलं रज्ज्वा आयोज्य "ऋषिं गृह्णामी" त्यृषिमाहृत्य"विष्णुर्मां रक्ष"त्वित्यात्मरक्षां कृत्वा "येऽस्मिन् देश" इत्यानम्य "हलकृष्टा" इति तामिलां प्रागन्तं कर्षयित्वा तस्मादुत्तरतो दण्डान्तरं निवर्त्य प्रतीच्यन्तमेवं क्रमेण ऋज्व-विच्छिन्नपदं दक्षिणावर्तं श्लिष्टपदं प्रागन्तमुत्तरान्तं कर्षयेत् । आचार्यस्तस्यानुपदं पञ्च-गव्यैः प्रोक्ष्य शुभाशुभं परीक्ष्य "गच्छध्वमार्या" इति विसृजेत् ।

तत्रनिमित्त-परीक्षणम्

वामावर्ते छिन्नपदे गोमूत्रे गौरे चाशुभं रक्तकृष्णकपोतगलवर्णे कर्तुर्मृत्युर्भवति । तुषभस्मकपालास्थिकेशरोमनखकण्टकादिदर्शने महद्दुःखम् । श्वेतमृत्तिकादर्शने स्वर्णरजतताम्रमुक्तापद्मरागवज्रवैडूर्यप्रवालस्फटिकादिदर्शने महांश्च वृद्धिः कर्तुः शुभमिति शुभाशुभं ज्ञात्वा अरिष्टानां शान्तिं कारयेत् । एवं प्रागुत्त-रान्तं निरन्तरं कर्षयित्वा प्राणस्थाने बलीवर्दौ संस्थाप्य पादान् प्रक्षाल्य विमुच्य तण्डुलानि गुडमिश्राणि तेभ्यो दत्वा प्रदक्षिणीकृत्य "देवस्य"त्वेत्यभिवन्द्य विसृज्य युगहलादीन् वाहनस्थाने संस्थाप्य प्रोक्ष्य बीजानादाय "इमे बीजा" इत्यभिमृश्य

बीजावापनम्

"समुद्रवती-शृङ्गे शृङ्ग" इत्युर्वीमानम्य "देवि त्व"यीत्युक्त्वा सर्वान् प्रागन्तमुत्तरान्तं वा प्रदक्षिणं "दुहतां दिव" मित्यद्भिः प्रोक्ष्य रक्षां सम्यग्विधायात्वरो गृहं गत्वा संपूज्य हिरण्यपशुभूम्यादीनाचार्याय दक्षिणां ददेत् ।

ब्रह्मपद्मविधिः

एवं कृत्वा कार्तिक्यां मार्गशीर्षे मासे ब्रह्मपद्मविधिं कारयेत् । तत्पूर्वं चतुर्थेऽहन्यपराह्णेऽमितं पूर्ववत्संपूज्य दक्षिणे अनपायिवैनतेयौ संपूज्य 'धारासा' येत्युक्त्वा प्रणम्य वसुधामनुमान्य 'दैविके' त्वित्यमितमानम्यानुमान्य अनुज्ञाप्य गृहं गत्वा प्रभाते स्नात्वा विष्वक्सेनमभ्यर्च्यानम्य 'सस्या इम' इति सस्यं समभिमन्त्र्य "शुद्धा इम "इत्यादीन् जप्त्वा सगणान् पशूनाहूय गोसावित्रीं जप्त्वा

तेभ्यो निवेदयेत् । 'इमां सिञ्चा' मीत्यद्भिः प्रोक्ष्य गृहं गत्वा प्रभाते सायाह्ने वा तिलतिल्वचूर्णैरपूपोदनैः 'भुञ्जन्तु देवा' इति बलिं सर्वत्र दत्वा [1]देवायार्घ्यं निवेद्यानुज्ञाप्य पूर्ववदेकाशीतिपदेषु देवताः संपूज्य गर्भालयं समुद्दिश्य पञ्चसूत्राणि प्रागुत्तराग्राणि अर्पयित्वा नाग भूत यक्ष दुर्गा घोटमुखी धात्री वपुषी राक्षस जय कृष्ण सुरुण्ड शिव प्राण कवि चक्र पुरुहूत ज्येष्ठा विद्या यशो भद्रा वेदभृत्तापस संजुषा मित पाञ्चभौतिकाः प्राच्यां [2]गृहपञ्चसूत्रस्था देवता भवन्ति । दक्षिणान् (?) पश्चिमादि शिव विश्व मित्रालयः बिम्बपृष्ठतः प्रादक्षिण्यक्रमेण पीठान्ते पूजितव्या भवन्ति । कुस्तुरुण्डाय गर्भाय वरुणाय धनदाय कालायेति दक्षिणे दहनाय विघण्टाय पवनाय [3]निमुदकाय गोलकायेति पश्चिमे महिषघ्नाय [4]वेल्लाय साराय कपोताय तुल्यवादिन इत्युत्तरे फुल्लाय फुल्लरूपाय विघ्नाय विघ्नकारिणे सर्ववाहनायेति प्राच्यां किष्किन्धाय तीर्थाय मोहनाय दण्डिने यूथकाय अन्तकाय स्पर्शघ्नाय विघ्नाय सुखदाय हितदायेति अङ्कणमध्यतो मध्येऽर्चयेत् । एते अष्टशताख्या देवाः ।

पदविभागः

पददेवताः

पिशाचेभ्यो भूतेभ्यो बलिं दत्वा 'योजः पूरावी' रेति सर्वे श्रावयेयुः। 'सर्वं व्यपै' त्विति मन्त्रेण जलमाप्लाव्य "पूर्वं स्थिता" इति पुनराश्रावयेत् ।

पददेवताबलिः

अन्नलाजतिलचूर्णतण्डुलभक्ष्यसंपृक्तं 'चरमं चराम' इति प्रभूतमवकीर्य 'अस्तु स्व' स्तीति जलैरुत्पूयनं करोति । एवं कृत्वा अमितं पुरस्कृत्य गृहं गत्वा 'सर्वेश्वर' श्चेति 'सर्वा वरुण' मित्युक्त्वोद्धृत्याद्भिः संपूर्य कुम्भं 'वरुणं पाशभृतं वीरमुदकप' मित्यभ्यर्च्य पुण्याहं वाचयित्वा पुनः प्रभाते यज्ञवाटं प्रविश्य वैखानससूत्रोक्तविधिना भूमियज्ञं हुत्वा पूर्वोक्तदेवता हुत्वा वास्तुपुरुषमभ्यर्च्य अग्रतो भामिनीं कृत्वा [5]'इमां सिञ्चा' मीति जलमाप्लाव्यानुमृज्य 'त्वां खना' मीति खनित्वा 'पांसून् प्रेष्या' मीत्युक्त्वा सर्वं तल्लक्षणं ज्ञात्वा 'यस्स' खेति विष्वक्सेनं सन्नम्य 'त्वं सर्व' मित्यनुमान्य 'सुक्रमा' इति कुम्भमभिमन्त्र्य 'पातु मां वरुण' इति शेवधिं पूरयित्वा 'आयातु भगवान् ब्र' ह्मेत्येकं कुशेशयं क्षिप्त्वा 'इदं ब्रह्मणा पूर्ण' मिति शुभाशुभं ज्ञात्वाऽऽरभेत ।

क्षिप्तेऽब्जे वामावर्ते याम्यगे कुटिले स्फुटिते स्तब्धे विदिग्गते वाधरोत्तरे

1. M. देवान् निवेद्य. 2. M. गृहपञ्चसन्धिस्थाः. 3. A. मुदकाय.
4. B वेल्लसाराय. 5. A. इमांसीमां.

निमित्त-परीक्षणम्

चाधोमुखे च आस्थापिते तोये पांसुच्छन्ने सबुद्बुदे फेने क्षिप्रनाशे सशब्दे चानर्थान्तरं कर्मकर्तुः [1]मृत्युर्भवति। तस्मिन्नहनि विद्युत्स्तनितोल्कानिपातब्रह्मदण्डध्वजधूमकेतुप्रतिसूर्येन्द्रचापाग्निदर्शने कुंभभंगे प्रतिमादिविरूपणे च महदनर्थसूचकं भवति। अत्र शोभनं तत्काले दिग्गतः सौम्यो विदिग्गतः पापकृदैशान्यगो नीलगः शुभदो आमकश्चण्डकश्चण्डो भवति। तत्कालस्थापितो दीर्घदीपश्चंचलो वामावर्तो विदिक्शिखः सधूमस्सर्वदोषकृत्। सौम्योऽचञ्चलश्चारुदर्शनो दीप्तोर्ध्वशिखश्चायुस्सर्वसंपत्समृद्धिदश्च। एवं [2]पञ्चभूतगतान् शुभाशुभान् परिज्ञायाशुभदर्शने शान्तिं हुत्वा शुभावहश्चेत्समारभेतेति विज्ञायते॥

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे कर्षणादिविधिर्नाम
[3] द्वाविंशोऽध्यायः॥



## ॥ अथ त्रयोविंशोऽध्यायः॥

अथातस्तरुणालयविधिं व्याख्यास्यामः। मूलालयादीशान्ये नीले सौम्ये वा

तरुणालयविधिः

बीजावापादनन्तरं तरुणालयं कुर्यात्। मृण्मयं दारुमयं वा नेष्टम्। इष्टकाभिः शिलाभिरिति। पञ्चमूर्तिप्रतिष्ठाचेत्पञ्चगर्भगृहाण्युपकल्प्य ऊर्ध्वतलं मानुष्ये सोन्नतं कृत्वा [4]स्थापयेत्। यत्तदिने [5]कर्तुमुद्योगस्तद्दिनान्नवमे सप्तमे

आचार्यवरणम्

पञ्चमे त्र्यहे वाऽङ्कुरार्पणं भवति। श्वः कर्तासीति सञ्चिन्त्य पत्न्यपत्ययुतान् शुद्धान् मन्त्रकल्पविचक्षणान् श्रीवैखानसविदः आहूयालङ्कृत्यानुज्ञाप्यैतैरेव कारयेत्। [6]सर्वे ते च सुलुप्तश्मश्रुकेशाः सुवस्त्राः सुशुद्धदन्तनखा

तत्र प्रयोगः

आपराह्णमुपवासयुता भवेयुः। तद्रात्रौ देवायतनोत्तरे तथैव भूमियज्ञं कृत्वा प्रोक्षणैः प्रोक्ष्य पुण्याहं स्वस्तिमृद्धिं च वाचयित्वा शक्तितो दक्षिणां ददाति। महाप्रतिष्ठावदक्ष्युन्मेषादि कृत्वा बिम्बमधिवास्य सप्तभिः कलशैर्देवं संस्नाप्य प्लोतेन विशोध्य विमानाद्दक्षिणेऽब्जाग्निकुण्डं [7]एकोनविंशत्यङ्गुलयुतं कृत्वा वैखानससूत्रोक्तविधिना आघारं हुत्वा तस्माद्दक्षिणे शयनस्थानमिति।

1. M. मृत्यु.कर्तुर्भवति. 2. M. पञ्चभूतान्. 3. ग. अष्टत्रिंशःखण्डः. 4. A. अधःस्थले स्थापयेत्. 5. M. उद्युक्तः 6. M. ते सुवस्त्रा. इत्येव पाठः. 7. B. एकोनत्रिंशत्यङ्गुलियुतं.

ग्रामं प्रदक्षिणीकृत्य सुकृते स्थण्डिले व्रीहिभिर्दर्भास्तरणे पञ्चशयनैर्वासोभिः मञ्चभिरहतैः शुद्धैर्वा आस्तीर्य 'यद्वैष्णव' मिति प्राक्छिरः शाययीत । परितः प्रागाद्युत्तरान्तमाहवनीयान्वाहार्य गार्हपत्यावसथ्यान् यथाक्रमेण मध्ये सभ्यं च कृत्वा पूर्ववदग्निं साधयित्वा आहवनीये सौरं सौम्यमाग्नेयमैन्द्रं अन्वाहार्ये याम्यं नैर्ऋतं दुर्गासूक्तं गार्हपत्ये वारुणमनिलदैवत्यमावसथ्ये कौबेरमीशदैवत्यं सभ्ये ब्राह्मं प्राजापत्यं गारुडमार्षं दौवारिकं वैष्णवयुतमाज्येन हुत्वा अग्निं विसर्जयित्वा द्वात्रिंशत्प्रस्थसंपूर्णं खण्डस्फुटितकालवर्जितं पक्वबिम्बफलाकारं कुम्भमादाय 'स्वस्ति दा' वीति तन्तुना यवान्तरमङ्गुल्यन्तरं वा परिवेष्ट्य 'धारा' स्विति नादेयं जलमुत्पूय कुशाक्षतैः सह वारिभिः 'विश्वतश्चक्षु' रिति कुम्भमापूर्य अतो देवादीन् जप्त्वा सौवर्णानिष्टमङ्गलवर्णचिह्नान् रत्नानि 'इयं जागृति' रिति क्षिप्त्वाभिमृश्य [1]अश्वत्थाशोकपल्लवैर्युतं [2]दुकूलयुग्मेनाहतेन युग्मवस्त्रेण वा आकण्ठमावेष्ट्यालङ्कृत्य प्राणायामं कृत्वा धारणामास्थाय[3] अपांपत्यास्रावितपीयूषाकृतिमैत्रं परममास्थायान्तर्गतजगत्त्रयप्रत्यगात्मविभासितमाहेन्द्रमध्यगं वारुणमण्डलं ध्यात्वा वारिबीजावेष्टितनिरुद्धं निधाय कुम्भमावेश्याद्यमष्टशतमावर्त्य 'विष्णुस्त्वां रक्ष' त्वित्यभिमृश्याखिलजगद्बीजमिति तं [4]प्रणम्याब्जहोमं हुत्वा हौत्रं प्रशंस्यावाहनं करोति । आवाहनक्रमेण जुष्टाकारस्वाहाकारौ [5]कृत्वा पूर्ववद्दिक्पालामितवीशादीनां पृथक् पृथक्कुम्भं पूजयेदिति[6] ॥

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे तरुणालयविधिर्नाम
[7] त्रयोविंशोऽध्यायः ॥

---

## ॥ अथ चतुर्विंशोऽध्यायः ॥

तरुणालयप्रतिष्ठा

प्रभाते स्नात्वा मृष्टसिक्तोपलेपनाद्यैस्संशोध्य शान्तिं हुत्वा शयनस्थं देवं संप्रणम्य 'भुवर्भुवर्भू' रिति बिम्बस्य मूर्धनाभिपादेषु क्रमेण न्यसित्वा प्रणवमुच्चार्य बोधयित्वा शयनादुत्थाप्याऽनम्यालङ्कृत्य कुम्भयुतं

---

1. B अग्रतोऽभिमृश्य. 2: M. अश्वत्थाशोकपल्लवैःयुग्मदुकूलपट्टेनाहतेन युग्मवस्त्रेणवा. B. दुकूलवर्णेण. 3. M, अपांपत्यास्रावित पीयूषभूताकृतिमैन्द्रं परमास्थायान्तर्गतजगत्त्रय प्रत्यगात्मविभासितमाहेन्द्रमध्यगं. B. पीयूषाकृतिमैन्द्रं. 4. M. प्रणमेत् अग्निपरिस्तीर्याज्येन पारमात्मिकहोमानन्तरंहौत्रं प्रशंस्य, 5. M. कृत्वा अब्जाग्निं विना सभ्येवाचत्वारश्चाग्नयश्च कृत्वा अन्वाहार्ये हौत्रंप्रशंस्यावाहनं करोति. 6. M. भृगुः. 7. ग. एकोनचत्वारिंशः खण्डः.

देवमादाय कनिक्रदादीन् जपन् गच्छेत् । देवावासं गत्वा ब्राह्मे मुहूर्ते संप्राप्ते 'प्रतद्विष्णु स्तवत' इति देवेशं स्थापयति । देवस्य दक्षिणे यमान्तरे कुम्भं संस्थाप्य यथायसि महासारं मुकुले गन्धं क्षीरे सर्पिः मधुन्युदकं तिले तैलमिव सर्वव्यापिनो व्योमाभस्य ब्रह्माद्यैरप्यनभिलक्ष्यस्य विष्णोः आवाहनं पूजनाभिमुखीकरणमुद्वासनं स्वेच्छानुमोदनमिति ब्रह्मवादिनो वदन्ति 'आणोरणीयान्महतो महीयाना' त्मेति 'आत्मैवेदं सर्वं' 'नेहना नास्ति किंच' नेति श्रुतयो गृणन्ति । यथादर्शसहस्रेषु दृश्यते पुरुषोत्तमः अम्भस्यर्कबिम्बानि गिरिषु प्रतिशब्द इव तस्य नानात्वम् । यथान्धकारे रज्जुःसर्पदण्डोदकधारा इव भासते तथा विद्याद्धरिम् । तस्मादात्मस्वभावः प्रपञ्चो न प्रपञ्च स्वभाव आत्मा । समुद्रस्वभावस्तरङ्गो न तरङ्गस्वभावः समुद्र इति यावत् । यथाह्यरण्यामनलस्सर्वगोप्येकदेशमथनात् ज्वलति तथा सर्वगतस्याविर्भावः । यथा सर्वगतो वायुः व्यजनेन प्रकाशते । तस्मात् ध्यानमथनाद्ब्रह्माविर्भवति । पश्चादावाहनध्यानजपहोमाद्यैः भक्तियुक्तैस्तृप्तो यथेष्टं ददाति । यथाग्नेर्विस्फुलिङ्गाः तथात्मनो ब्रह्मेशेन्द्रादयः । तद्ब्रह्माचलं चलमिति तत्त्वविदो वदन्ति । चलेषु पूजितं सर्वमचलं गच्छति । तस्मादात्मवित् ज्ञात्वैव देवीभ्यामृषिभ्यां दिक्पालैः देवमावाह्याभ्यर्च्य पुण्याहं वाचयेत् । ततो निष्काधिकं पृथक् पृथक् सुवर्णं[1] दत्वा ब्राह्मणान् भोजयेत् । ततः प्रभृति नित्यं पाद्यादिभिः पञ्चविंशतिभेदैरर्चयेत् । इदं पुनः नापुत्राय नाशिष्याय दद्यात् । एवं कर्तुमशक्तश्चेद्ब्रह्मपद्मे कृते तत्रैवाऽमितं संस्थाप्य सप्तविंशतिभेदैः [2]सान्नबलियुतमेवं प्रतिष्ठान्तमभ्यर्च्य दैविकं बिम्बमादाय विमाने स्थापयेदिति काश्यपः ॥

ब्रह्मणः सकलनिष्कलस्वभावः

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे [3]तरुणालयबिम्बस्थापनविधिर्नाम [4]चतुर्विंशोऽध्यायः ॥

## ॥ अथ पञ्चविंशोऽध्यायः ॥

अथ ऊर्ध्वं तरुणालयविधिं व्याख्यास्यामः । स्वेदरुधिराद्युक्तदोषदर्शने ग्रामस्य यजमानस्य वा अनुकूलर्क्षे क्षिप्रं तरुणालयं कारयेत् । अन्यथा महत्तरो दोषो भवति । तस्मादुक्तनिष्कृतिं कृत्वा आरभेत् । ऐन्द्रे

तरुणालयविधिः

1. क. ऋत्विग्भ्योदत्वा. 2. M सायमन्नबलिसंयुक्तं. 3. अध्यायनामक मात्रे. 4. ग. चत्वारिंशःखण्डः.

महद्भयमाग्नेय्यां धनलाभं याम्ये वृद्धिप्रदं नैर्ऋते कर्मसिद्धिदं वारुणे सुखदं वायव्ये कर्मनाशकृत्सौम्ये सर्वनाशप्रदमैशान्ये दुःखदम् । तस्माद्यमपावकनीलवरुणानां दिक्षु मण्डपं प्रपां वा कूटं वा विमानसमं पादहीनमर्धहीनं कपोततुल्यं वा कारयेत् । शून्यागारे मन्दिरैकदेशे वा न कारयेत् । यावत्पदं तावत् यथा मूलस्य तथा [1]द्वारम् । अस्य परिवाराणां तथा परितः पीठान्युपकल्प्यालये ब्रह्मभागे पीठं प्रकल्प्य कुड्यो-भयपार्श्वस्थलान्यादर्शवत्समुपकल्प्यानुलिप्याङ्कुरानर्पयित्वा प्रतिष्ठो-क्तदिनात्पूर्वरात्रौ भूमियज्ञं पर्यग्निं पुण्याहं च कृत्वा पञ्चाग्नीन्परिस्तीर्य पूर्ववद्धुत्वा सभ्ये तद्देवमन्त्रैर्देवीभ्यामृषिभ्यां द्वारपालेभ्यो विमानपालेभ्यो लोकपाले-भ्यस्तत्तन्मूर्तिभिर्जुहुयात् । प्रयोगः

पूर्वयामे गते पश्चात्पूर्ववत्कुम्भमाराध्याघोष्य देवस्य यमान्तरे न्यस्य 'भगवतो बले' नेति प्रणम्यानुज्ञाप्य सहस्रशीर्षादीन् जप्त्वा नृत्तगेयवाद्यादिभिर्निशां निनयेत् । प्रतिसरां न योजयित्वा प्रभाते स्नात्वा पञ्चभिः प्रकारैर्देवेशमानम्य विष्णुसूक्तं जप्त्वा इमं मन्त्रं जपेत् ॥

"अनर्हमेतत्त्वद्बिम्बं जीर्णं तूर्णं व्यपोह्य च ।
देवदेव जगन्नाथ [2]स्थीयतामत्र वै प्रभो ॥
यावद्बेरं नवं कृत्वा प्रतिष्ठां कारयामहे ।
प्रसादं कुरु [3]तावत्त्वमस्मिन् बेरे जगत्पते ॥"

इत्युक्त्वा अनुज्ञाप्य त्र्यब्दमब्दद्वयमब्दं षण्मासं वा कालावधिं निवेद्य पश्चाद्धातु-रत्नबीजांस्तत्तन्मन्त्रेणोद्धृत्य स्मृत्वा ध्रुवस्थां शक्तिं कुम्भे 'त्वायातु भगवा' नित्या-वाह्य ध्वजपिञ्छातपत्रचामरतालवृन्तैः [4]धूपदीपैश्च [5]पताकादिभिरलङ्कृत्य ओङ्कार-जयशब्दैस्तत्तद्यैराघोष्य कनिक्रदादीन् जपित्वा कुम्भयुतमर्चामादाय गच्छेत् । देवा-गारं प्रदक्षिणीकृत्यालयं प्रविश्य 'भूरसि भू' रित्यादिना कुम्भं प्रतिष्ठाप्य अर्चापीठे तदर्चां[6] प्रतिष्ठाप्य कुम्भस्थां शक्तिं समानीय 'आयातु भगवा' नित्यावाहयेत् । अक्षरन्यासं कृत्वा आवाह्य पुण्याहं वाचयित्वाभ्यर्च्य पायसकृसरयावकादीन् निवेद्या-र्घ्याचमनं दत्वा एलालवङ्गकर्पूरादिमुखवासं निवेद्य नित्यमावाहनविसर्गौ[7]विना पाद्यादि-

1. M. द्वारमध्यपरिवाराणां. (?) 2. A. B. लीयतां. 3. A. B. नो तावत्. 4. M. दीपैश्च. 5. A. ध्वजपताकादिभिः 6. झ. अर्चा. 7. झ. कोशे हित्वा.

[1]भोगैरर्चयेत् । पश्चात्सर्वगन्धयुतं नादेयं जलं शुद्धपात्रे सङ्गृह्य 'नमो वरुणः शुद्ध' इति ध्रुवस्य पादौ प्रक्षाल्य पश्चादुक्तलक्षणसम्पन्नेन शिल्पिना नवीकरणं कारयेदिति काश्यपः ॥

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे [2]द्वितीयतरुणालयविधिर्नाम

[3]पञ्चविंशोऽध्यायः ॥

---

## ॥ अथ षड्विंशोऽध्यायः ॥

अथ पूर्वसंस्कारम् । वास्तुपुरुषं ज्ञात्वा मर्माणि परिहृत्यान्यत्र पूर्वं खनित्वा शल्यान्यपोह्यारभेत । द्वौ वास्तु पुरुषावचलात्मकः चलात्मकश्चेति । अचलस्तत्र भूमिष्ठः प्राक्छिराः [4]भूमिगम्नाङ्गोऽधोमुखः । तस्योपरि परः सवनत्रयार्धरात्रेषु उदक्प्राग्याम्यापरशिरा भूत्वोत्तानतो[5] नित्यं चरति । अथ वा मध्याह्ने प्राच्यां सायाह्ने दक्षिणतो निश्यर्धे पश्चिमे प्रातरुत्तरतश्शिरस्तस्येति केचित् । तस्मात्तदूरुबाहुहृदयप्रदेशेषु गर्भालयमन्यत्र सन्धिस्थानानि सर्वाण्यन्यदेवा[6]धिष्ठितदेशं कुर्यात् । सन्धिस्थानानि सर्वाणि गृहं प्रति वर्जयेत् । मेढ्रनाभिसन्धीन् परिहृत्योर्ध्वोदरे प्रासादं कारयेत् । कूर्परजङ्घाहस्तनखकर्णाक्षिमर्माणि सर्वाणि परिहृत्य यज्ञे प्रधानाग्निं स्थापयेत् । एवं ज्ञात्वोद्दिश्य [7]सर्वसमं चतुरश्रमाहरेत् । अध्यर्धायामं भौतिकं [8]दीर्घायामं राक्षसं किञ्चिद्धीनमासुरं किञ्चिद्दीर्घं पैशाचमिति । अतस्सर्वसमं चतुरश्रं मण्डलं वा दण्डेन समुपकल्प्य खानयेत् ।

वास्तुसवनम् द्वौ वास्तुपुरुषौ

खननात्पूर्वं [9]भामिनीं कर्तारं वान्यं तदैशान्यां स्थितं "वद" स्वेत्युक्त्वा तदुक्तेनाक्षरेणोपलक्षयेत् । तत्र अकचटतपयशवर्गै रक्तकृष्णश्वेत[10]नीलपीतश्यामासितकपिलवर्णाः लोहाङ्गारभसितेष्टकाद्रुमसञ्चयोपल[11]कपालरत्नानि तत्रेति ज्ञात्वा स्पृष्टाङ्गैरपि लक्षयेत् । शिरःकण्डूयने पुरुषार्धप्रमाणेऽस्थिशल्यं मुखे हस्तद्वये दारुशल्यं ग्रीवायां हस्तत्रये [12]कालशृङ्खलमूर्वोर्हस्तद्वये सार्धे [13]पश्चाद्यवयवं हस्तयोर्जानुमात्रात् [14]खट्वापादं बाह्वो (र्हि?) स्तत्रये शलाकां दक्षिणहस्ते

तत्र निमित्तपरीक्षणम्

---

1. ग. भेदैः. 2. A. मात्रे नामकथनं. 3. ग. त्रिचत्वारिंशःखण्डः.
4. झ. धूमाङ्गः. 5. A. उत्तानाननः. 6. B. अधिष्ठितं. 7. ग. सर्वमयं चात्युग्रं.
8. ज. द्वितीया यामं. 9. A. भामिनीमिति न दृश्यते. 10. A. नीलचित्रश्याम.
11. B. कपालरत्नसुवर्णानि. 12. B. कालं. 13. झ. पश्चरबद्धवम्. 14. खादन्यत्र खट्वाङ्गपादं.

वितस्तिमात्रे हस्त्यवयवं [1]कर्णिकाधोदधः पादे अष्टाङ्गुले चर्मजमङ्गुष्ठे खेटकावयवं [2]सीसं गैरिकं लोहपात्रं कनिष्ठिकायामष्टाङ्गुले [3]कांस्यमन्येषु हिंगुलिकमिति । [4]यदङ्गं स्पृष्टं तस्याङ्गे वास्तुपुरुषस्य सशल्यम् (?) । [5]विधूनन सूचन वीक्षणाद्यसकृद्यत्र तत्रास्थिशल्यमिति ज्ञात्वा जलदर्शनात्तत्सर्वं खानयेत् ।

अशुभ-निमित्तानि

खननकाले क्रिमिकीटपतङ्गसङ्कुले सर्पमूषिकावृश्चिकादिदर्शने खनकाङ्गपतने-[6]भ्रमणे खननभेदे त्सरुभङ्गे चाद्भुतदर्शने भयातङ्कमरणादयो भवन्ति । तत्र महाशान्तिं च हुत्वा शुभर्क्षे शुभहोरायां देवदेवमनुस्मृत्य खनित्वा तत्र सीमान्तं सर्वमपोह्यान्यत्र शर्करासिकतासंमिश्रैर्गालिन्दं प्रमृज्जैः (?) शिलाभिरिष्टकाभिस्सोदकमवटे मृत्तिकां पूरयित्वा क्षुण्णं घनं पूर्ववदेकचितं कृत्वा तूष्णीं निधाय [7]दारूपलेष्टका विधिनाऽहरेदिति विज्ञायते ॥

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे वास्तुपुरुषरूपनिरूपणं नाम

[8] षड्विंशोऽध्यायः ॥

---

## ॥ अथ सप्तविंशोऽध्यायः ॥

दारुसंग्रहणम्
शस्त्रदेवाः

अथ दारुसङ्ग्रहम् । श्वः कर्तासीत्याचार्यं समनुज्ञाप्य [9]शिल्पिनं चैव विवधकादीनाहूय परशुलूनतक्ष[10]नीवकुठारटङ्कादीनाहृत्य संशोध्य शुद्धे देशे वस्त्रमाल्यानुलेपनैरलङ्कृत्य परशौ रुद्रं लूने भूतान् तक्षे महेन्द्रं नीवे यमं कुठारटङ्कयोः मृत्युं चाभ्यर्च्याचार्यादीन् भोजयेत् । ऋत्विग्भिस्सह शकुनान्युपलक्ष्य वनं प्रविश्य देवायतनमार्गश्मशाननदीतीरोद्यानजान् सीमागान् [11]चैत्यगान् बालवृद्धातुरकपक्षिसरीसृपयक्ष[12]राक्षसपिशाच-गन्धर्वोरगाश्रितान् वल्लीनद्धान् कन्यालालितान्(?)हस्तिवाय्वशनिशस्त्रभग्नदग्धान् स्वयं-शुष्कानन्त्यजाश्रितान् ग्रामाभ्यन्तरजानेवमादीन् हित्वा बहुपलाशशाखापुष्पफलाढ्यान् ऋज्वव्रणानकोटरान् दृढतरमूलानालोक्य तस्मादतिदृढतरमुक्तलक्षणसम्पन्नमेकमादाय

वर्ज्यवृक्षाः

---

1. ग. कण्टकाधोध:. 2. A. सममिन्द्रे. क. अङ्गसंस्पर्शे. च असमिश्रे. 3. A. अन्येष्वङ्गुलिकमिति. ख. षडंगुलिकमिति. 4. च. यदङ्गस्पृष्टस्याङ्गे. 5. A. विज्ञानन. च. विसूचन. 6. क. भ्रामणेषु तत्सरुभेदे. 7. क. सम्मिश्रमुपलेष्टकाविधिनाहरेत्. 8. ग. 46 खण्ड: 9. क. शिल्पिनमाहूयेत्येव. 10. च. निव. 11. च. चेत्वदकान्. 12. च. राक्षसी.

तत्पार्श्वे मातृविघ्न[1]वीराणां देशमुपकल्प्य शस्त्रदेवान् पृथक् पृथक् सम्पूज्य

तत्रप्रयोगः [2]वृक्षस्य चतुर्दिक्षु[3]वनस्पतिभ्यः कुमारीभ्यो वृक्षराजेभ्यः सर्वकामप्रदेभ्यो नम इति बलिं दत्वा अग्नये वनराजाय सोमाय यमाय स्थूललाक्षाय व्याधाय मृगरूपिणे वनस्पतिभ्यः कुमारीभ्यो वल्लीभ्यः कुसुमाय शलाटवे बृहत्त्वचे पुण्यायामिततेजसे सूर्याय [4]सूर्यरूपाय शृङ्गिणे भूतरूपिणे नागहस्ताय दिव्याय [5]त्रिहस्ताय विघ्नाय विघ्नरूपाय विनायकाय प्रसारिणे मुरुण्डाय न्यर्णाय नागेभ्यो भूतराजेभ्यश्चारणेभ्यो दिवाचरेभ्यो नक्तंचरेभ्यस्सन्धिभ्यस्सन्ध्याचरेभ्योप्सरोभ्यो[6]यक्षेभ्यः कुमारीभ्यः सन्ध्याचरीभ्यः आसुरीभ्यो राक्षसीभ्यः पिशाचीभ्यो [7]वन्याय स्थलचारिणे वृक्षदेवेभ्यः स्थानदेवेभ्यो [8]विद्याधरेभ्यो रूपिभ्यो मिथुनेभ्यः सुखेभ्यः स्वाहेति व्याहृत्यन्तं हुत्वा पर्यग्निं कृत्वा [9]सर्वेश्वरं जगन्नाथं[10]चामुण्डं सर्वतश्चरं ब्रह्माणीं सरित्प्रियां वैशाखिनीं [11]विश्वगर्भां वरदां जयन्तीं कालीं वक्रतुण्डां च व्याहृत्यन्तं घृतेनैव हुत्वा पुण्याहान्ते प्रतिसरां बध्वा पुष्पगन्धवस्त्राद्यैरलंकृत्य,

तरो गृह्णामि देवार्थं त्वां प्रसीद ममानिशम् ।
गच्छन्तु देवतास्सर्वाः प्रीताश्चैनं समाश्रिताः ॥

इति [12]वृक्षराजमामन्त्र्याचार्यं शिल्पिनं च सम्पूज्य रात्रावेव यूथाधिपानपायिनावभ्यर्च्य ताभ्यां घृतमिश्रैः सर्षपैर्हुत्वा तिललाजसक्त्वपूपसंपृक्तं बलिं भूतेभ्यस्तेभ्यो दद्यात् । प्रभाते स्नात्वा पुण्याहं वाच्य घृतपूर्णपात्रं "सोमाय नम" इति जलमध्ये क्षिप्त्वा "सोमं राजान" मित्युदङ्मुखं छेदयेत् । तत्र प्राचीमुदीचीं वा शकला यदि गच्छेयुः [14]महावृद्धिर्भवति । प्रतीच्यभिमुखा विघ्नकरा दक्षिणागा विपत्करा भवन्ति । अतः [15]प्रतीक्ष्य सर्वाङ्गं छेदयेत् । प्रागग्रान् कुर्यात् ।

खदिरासनसालसुवर्णानिलार्जुनाशोकमधूकत्राक सुरवर्तिनिम्बदलित्थ वकुल-

दारुभेदाः कन्दलिवञ्जुलाश्चेत्येते सारदारवः सर्वकार्येषु ग्राह्या भवन्ति । तानेव

1. क. सोमवीराणां. 2. B. वृक्षस्य चतुर्दिक्ष्विति नास्ति. 3. B. वृक्षेन्द्रायेत्यादिकं इतआरभ्य वल्लीभ्य इत्यन्तं ग कोशे न दृश्यते. 4. B. रूपायेत्येव. 5. B. त्रिहस्ताय विघ्नायेति न दृश्यते. 6. च. सन्ध्याभ्यः. 7. च. यक्षीभ्यः. 8. B. वनाय. 9. A. विद्याधरेभ्य इति नास्ति. 10. A सर्वेश्वरायेत्यादिचतुर्थ्यन्तास्सर्वतश्चरायेत्यन्ताः दृश्यन्ते. 11. च. चामुण्डीं सर्वतश्चरीमिति. 12. B. विश्वगर्भामित्यादि व्याहृत्यन्तं नास्ति. 13. B. आमन्त्र्य नमस्कृत्य. 14. ग. महर्द्धिः. 15. क. प्रतीच्यां. 16. ग. कपित्थ.

स्थूणाफलकोत्तर [1]बोधिकाद्वारपट्टिकार्गलसालभञ्जिकाद्यर्थं संशोधितानृजुवृक्षांस्तक्षयित्वा आहृत्योच्छिष्टफेन[2]तुषोषरर्धिजावर्चः (?) प्रभृतीन् परिहृत्य[3] शकटैः वैवधैकरन्यैर्महिषैर्वृषैर्वा वाहयित्वा आघोष्य[4] देवस्थानं गत्वा तत्र निधापयेदिति विज्ञायते ॥

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे दारुसङ्ग्रहणविधिर्नाम [6]सप्तविंशोऽध्यायः ॥

## ॥ अथाष्टाविंशोऽध्यायः ॥

शिलासङ्ग्रहणम्

शिलाभेदाः

अथ शिलासङ्ग्रहणम् । गिरिजा भूमिजा वारिजाश्चेति शिलास्त्रिविधा भवन्ति । गिरिजानां वारिजानामूर्ध्वमुखं भूमिजानामधोमुखं गिरिपार्श्वप्रजातानां तत्प्रेक्षमुखम् । यतो हृतिस्तत्र शिरो विद्यात् । नदीजानां जलमार्गमुखम् । प्राङ्मुखी जयदा दक्षिणाशिराः शान्तिदा पश्चिमाशिराः श्रीकरोत्तराशिराः शुभदा विदिक्छिरसं विदिङ्मुखीं वर्जयेत् । भूमिजा गरीयसी मध्यमा गिरिजा कनीयसी वारिजा । विशालां बहुलां स्निग्धामविवरां ग्रन्थिवर्जितां व्यक्तशब्दघनां पुमांसं शरावोदकसङ्काशां वधूं [7]कर्कशां नपुंसकमिति । देवानां पुंशिला देवीनां स्त्रीशिला ग्राह्या न ग्राह्या नपुंसकशिला । पुष्पजलसङ्कीर्णे भूमिजा वारुणे शान्तिदा । उत्तरे पूर्णतोयाढ्या[8] भूमिजा । पूर्वे क्षीरवृक्षकीर्णभूमिजा [9]दक्षिणेऽहिकाकादियुत[10]भूमिजा अनर्थदा । पूर्वतः[11]सा माहेन्द्री पुष्टिदा । राजभोगदा [12]प्राग्दक्षिणयोः । खदिरकाश्मर्यपालाशयुता [14]उत्तरे कपोतक्रव्यादपक्षि[15]भ्रमरमयूराधिष्ठिता अन्तर्गततोया आग्नेय्यामायुरारोग्यपुष्टिदा विसू (?) श्लेष्मातकविभीतककुस्तुंभावृता । वायुसूर्याग्निना दग्धां किरातगणदूषितां[16] यक्षरक्षः पिशाचदुष्टां वर्जयेत् । शुक्लरक्तपीतासितवर्णाः क्रमश उच्छ्र्यास्तत्र कुन्देन्दुक्षीरसदृशी शुभमुक्तानिभा स्फटिकाभा श्वेतपद्मदलप्रभा कुमुदप्रभा मृणालसदृशी ब्राह्मकर्म-

शिलाप्रशंसा

---

1. बोधिकोमरकलालार्गलसालेत्यादि कादन्यत्र- 2. B. वृद्धवृक्षान्. 3. तुषारर्थिवर्चः 4. क. शाखास्समादाय शकटैर्वृषैरित्यादि 5. च. देवेशं. 6. ग. सप्तचत्वारिंशः खण्डः.

7. च. इति इत्यधिकं. 8. क. आढ्यभूमिजेति समस्तं पदं. 9. क कीर्णभूमिजेति समस्तं. 10. B. व्रीहिकाकसंतृणपूर्वतः सामाहेन्द्री. 11. क. युतभूमिजेति समस्तं पदं. 12. क. स्यात् 13. क. प्रत्यक्. 14. B. तित्तिरि. 15. क. भ्रमरयूथान्तर्गततोयाः ज्ञेया इत्येव आग्नेय्यामिति नास्ति. 16. ग. भूषितां.

विवृद्धिदा वैडूर्यपद्मरागाभा सिन्दूरसदृशी दाडिमकुसुमोपमा रक्तोत्पलदलप्रभा कुन्दुरुष्ककुसुम्भाभा क्षात्रवीर्यविख्यातिदा हरिद्रा पीतवर्णा पुष्यरागप्रभा मरकतनिभा गोरोचनाभा वैश्यानां गोधान्यधनवृद्धिदा कृष्णा रूक्षप्रभा माषाञ्जनसदृशी नीलश्यामा सकृष्णा अवरववर्णजवीर्यपुष्टिप्रदा। बिन्दुनिम्नसिरास्फोटविपावर्तुलग्रन्थियुक्तां वर्जयेत्। व्याधिवधबन्धनार्थनाशमरणकीर्तिनाशनत्वात्। उक्तवर्णशिलालाभेऽञ्जनप्रभां गृह्णीयात्सर्वकामफलप्रदत्वात्। उक्तदोषविवर्जितां दारुग्रहणविधानेन गत्वा छेदने भेदने तद्वर्णविपरीतानि नानावर्णानि [1]मण्डलानि दृश्यन्ते, यत्र[2] तत्र गर्भ इति जानीयात्। तत्रासितमण्डले कृष्णाहिं कपिले मूषिकां रक्ते कृकलासं पीते गोधां गुडवर्णे पाषाणं कपोते गृहगोधिकां [3]कृपाणसदृशे जलं पद्मवर्णे वालुकां विचित्रे वृश्चिकान् नीलपीतनिभे शलभान्मधुवर्णे खद्योतम्। [4]मण्डलसंख्यया गर्भाणि विनिर्दिशेत्। एवमेव भूरुहेषु जानीयात्। गर्भदर्शने महत्तरो दोषो भवति। तत्र सर्पदर्शने स्वयमेव कर्ता नश्यति। मूषिकेऽनपत्यत्वं कृकलासे अल्पायुर्गोधायामनारोग्यं शलभे दारिद्र्यं खद्योते अन्धत्वं मण्डूके धनक्षयं सिकते व्याधिः जले शरीरपीडा गौलिकायां कुलक्षयं एवमनेके भवन्ति। तस्मात्परीक्ष्य सगर्भां वर्जयेत्। मुखं पृष्ठं शिरः पादौ च ज्ञात्वा सिराश्च परिहृत्य लक्षणसंपन्नमेव कल्प्याहरेदिति विज्ञायते ॥

शिलादोषाः

दारुदोषाः दोषस्वरूपम्

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे शिलासङ्ग्रहणं [5]नामाष्टाविंशोऽध्यायः ॥

## ॥ अथैकोनत्रिंशोऽध्यायः ॥

अथेष्टकालक्षणम्। सस्यक्षेत्रे नदीतीरे वैकभागं[6] पुलिन्दं द्विभागं वालुकं तत्समं ग्रावादिकमेवं संशोध्य काष्ठलोष्टतृणशिलादिवर्जितं श्लक्ष्णं जलेन सम्मर्द्य बहुदिनपर्युषितमृजुचिक्कणमार्जमेवं[7] समादाय कृमिकीटपक्षिकाद्यसङ्कुले समन्तात् जलविमुक्ते मनोरमे शुद्धे अवकाशे अच्छाये विवर्ज्य यमविस्तारान् द्विगुणायामान् भागोच्छ्रितान् सुदृढान् लघुतरनिर्मितान् भूमिकान्

इष्टकालक्षणम्

1. B. मण्डलानीति न दृश्यते. 2. क. ग. यतस्सा. 3 क. कृसरसदृशे. 4 क. संज्ञया. 5. ग. अष्टचत्वारिंशः खण्डः. 6. B. नागां. 7. च. और्व्यं.

कृत्वा तैः पृथक् पृथक् विश्रामितायस्पृष्टाः केशास्थिलोष्टपाषाणशर्कराद्यसंश्लिष्टाः खण्डस्फुटितविहीनाश्चतुराः समाश्चेष्टकाः कल्पयित्वा [1]आतपेनाशोष्य विविक्ते जनवर्जिते महच्छुल्लीं प्रकल्प्या[2]ग्निनोद्दीप्य विमानसीम्नो बाह्ये स्थापयित्वा आरभेत । एवं तरुपाषाणेष्टकाः सङ्गृह्य नवमार्गेष्वे[3]कमालव्य यथाशक्त्यारभेत ।

अष्टशतकं पञ्चसप्ततिकमष्टाचत्वारिंशकं पूजकविप्रजनयुतं [4]क्रमादुत्तमत्रिकम् द्वात्रिंशत् षोडशद्वादश वा मध्यमं त्रिकम् । नवकं पञ्चकं त्रिकं वाधमत्रिकम् । चतुष्कालार्चनायुक्तं मूर्तीनां पृथक् पृथक् चतुष्कालं बहूपदंशदधिसर्पिर्हव्यान्नबलिचतुष्कनृत्तगेयसमन्वितं विष्णुपञ्चकदिनपूजादियुतमयनाब्दयुगान्तभूतसंप्लवादिषु मासि मासि च स्नपनबल्युत्सवविस्तीर्णमेवमुत्तमम् । द्विकाल[5]मन्त्रबलिसंयुतं सायं अर्घ्यपुष्पबलियुतमयनादिषु कालेषु स्नपनोत्सवसंयुतं मध्यमम् । मध्याह्ने प्रातः सायं च हव्यसंयुक्तं [6]त्रिकालपूजनायुतं बलिहीन[7]महीनं वा कालोक्तस्नपनयुतमेतदधमम् । एतेषु स्वशक्तितो भेदा[8]गमसमालम्ब्यलोभमोहविवर्जितो ब्राह्मेण विधानेन भगवन्तमनुस्मृत्यान्यतमयाआचर्याराधकपरिपूर्ण[9] भोगमात्मार्थमिति निश्चित्य तदर्हं मन्दिरमारभेत् । कुब्जवामनातिह्रस्वदीर्घं विना कर्तुर्गुरोर्वा हस्तेन [10]नाहं तदर्धहस्तेनाष्टसप्तषडधिकदशकमानमुत्तमं त्रिकम् । पञ्चचतुस्त्र्यधिकदशकमानं मध्यम् त्रिकम् । द्व्येकशून्याधिकदशकमानमधमत्रिकम् । नवाष्टसप्तषड्ढस्तादहीनमेवं विमानप्रमाणमादाय स्वशक्तितः कल्पयेत् । पञ्चहस्तविहीने भगवन्तं नैव कल्पयेत् । कल्पयेदप्यच्युतस्तत्र न रमेत । तदुत्सेधादष्टभागं भूमिलब्धं शिरस उपरि (?) दृढस्थाने विहीनेऽपि दोषो नास्ति । एवं ज्ञात्वाधस्तात्समं दृढतरमुपकल्प्य विधिना प्रथमेष्टकान्यासं कृत्वा शिलाभिर्द्रुमैरिष्टकाभिर्वा रम्यं [11]मनोहरं शुभदं विमानं शास्त्रज्ञैः सत्सम्मतैर्व्याधिदोषविवर्जितैर्वाक्कर्मबुद्धिकौशलैस्सर्वदोष विवर्जितैश्चारुदर्शनै रूपयौवनसम्पन्नैः शिल्पिभिः कारयेदिति विज्ञायते ॥

आलयप्रमाणम्

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे इष्टकालक्षणविधिर्नामै-
[12]कोनत्रिंशोध्यायः ॥

---

1. B. अनातपेन. 2. क. अग्निनेति न दृश्यते. 3. घ. एकमार्गं 4. B. उत्तमं त्रिकं इत्येव. अन्यत्रोत्तममिति नास्ति 5. B. नवबलि 6 च. एककालपूजनायुतं 7. क. अहीनाङ्गमिति क पुस्तके नास्ति. 8. B. गलीति पाठः. 9. घ. भोजनं. 10. ग. यहं. 11. क. मनोरमं. 12. ग. एकोनपञ्चाशः खण्डः.

## ।। अथ त्रिंशोध्यायः ।।

प्रथमेष्टका-विधानम्

अथ प्रथमेष्टकाविधानम् । विधिना कल्पिते देशे दृढतरे [1]जलेन सर्वं सममिति ज्ञात्वा पूर्ववच्छङ्कुं संस्थाप्य छायाग्रपतनं दृष्ट्वा ऐशान्यामङ्गुलार्धं मुखं [2]याम्ये समं वारुण्यां वायुवीक्षणं सौम्यं वायव्यामर्धाङ्गुलमेवं कृते समं भवति । प्रागग्रपतनार्थेषूक्तेरेऽपि वर्धयेत् । उदगयने समाग्रमर्धाधिकं ततोन्यायं प्राच्योदीच्यप्रबन्धने प्राचीमेवं ज्ञात्वा चतुष्पञ्चषडंशा भित्तिमूलाः क्रमेणोत्तममध्यमाधमाः [3]त्रिभूमीनां चतुर्थांशं पञ्चभूमीनामष्टांशं सप्तभूमीनां [4]दशांशमेवं गर्भगृहं ज्ञात्वा शुभर्क्षे शुभहोरायां प्रथमेष्टकां न्यसेत्[5]। ग्रामस्य यजमानस्यानुकूल्ये [6]स्वारोहितेषु नक्षत्रेषु ध्रुवेषु च करणेषु [7]शुभेक्षिते [8]शशिराशिस्थेष्वारभेत । तद्दिनात्पूर्वमङ्कुरानर्पयित्वा श्वः कर्तास्मीति सञ्चिन्त्य प्रभाते दक्षिणे वा प्रपां कृत्वा उत्तरे पूर्ववद्बालौ वास्तुहोमं हुत्वा प्रपायां पञ्चाग्नीन् समुपकल्प्य तत्सूत्रविधिनाघारान्ते वैष्णवं हुत्वा ऐन्द्रमाहवनीयेऽन्वाहार्ये आग्नेयं याम्यं नैर्ऋतं गार्हपत्ये वारुणं वायुदैवत्यमावसथ्ये सौम्यमैशानं सभ्ये शान्तिं हुत्वा सभ्याद्दक्षिणे धान्योपरि वासांस्यास्तीर्येष्टकाश्च शिला वा संस्थाप्याभ्यर्च्य वस्त्रेणाच्छाद्याग्निं परिस्तीर्य वैष्णवं श्रीभूमिदैवत्यं हुत्वा प्रभाते स्नात्वा आचार्यं पूजयित्वा अलङ्कृत्य स्थापकान् संपूज्य ग्रामं प्रदक्षिणीकृत्य द्वारस्य दक्षिणे भागे पद्मरागवज्रप्रवालेन्द्रनीलमरकतमौक्तिकपुष्यकान्तवैदूर्यस्फटिकादीनि मध्यादीशान्तमाक्षिप्य "आ त्वा हार्ष" सूक्तेन प्रागग्रं वोत्तराग्रं वा युग्मं च देवदेवमनुस्मृत्य स्थापयेत् । एवं कृत्वा द्वारस्य दक्षिणस्तम्भे कवाटार्गलयोगे गर्भागारे वा यमवरुणसोमदक्षिणांशेषु नृपवैश्यशूद्रविप्राणां वृद्ध्यै स्तम्भं स्थापयेत् । अधिष्ठानसमं श्वभ्रावगाढं कृत्वा पूर्ववद्गर्भं संस्थाप्य पश्चाच्छिल्पिभिः शिल्पशास्त्रविधानेनारभेतेति विज्ञायते ।।

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे प्रथमेष्टकाविधानं नाम

[9] त्रिंशोध्यायः ।।

---

1. B. जलेनेति नास्ति. 2. A. प्राग्यामानिलेषु. 3.4. च. त्रिभागैकत्रिभूमिनाश्च. 4. च. दशांशं वा. च. भूमिनामेवं. 5. ग. न्यसेदिति नास्ति. 6. क. स्वारोहितेष्विति नास्ति. 7. च. चन्द्र शुभेक्षित इति. 8. क. शशीति नास्ति. 9. ग. पञ्चाशः खण्डः.

## ॥ अथैकत्रिंशोध्यायः ॥

विमानलक्षणम्

अथ विमानलक्षणम् । हस्तशतं षण्णवतिर्नवतिश्चतुरशीतिरशीतिः पञ्चसप्ततिश्चतुष्षष्टिः षष्टिः षट्पञ्चाशदित्युच्छ्राया विमानानां क्रमेण नवधा भवन्ति । द्वात्रिंशत्पञ्च[1]विंशोत्सेधं वा द्वादशैकादश दश नवाष्ट सप्तांशं वा विस्तारम् ।

विमानषडङ्गानि तल्लक्षणम्

अधिष्ठानपादप्रस्तरग्रीवाशिखरस्थूप्याह्वाः षड्भागा भवन्ति । अत्र पादशिखरौ द्व्यंशावेकांशाः शेषाः । तत्र ललाटास्योरोनाभिजानुसमोत्सेधानि पञ्चाधिष्ठानानि । तत्त्रिधा कृत्वैकांशे जगतीं द्वितीये कुमुदं तृतीयं चतुर्धा विभज्य द्व्यंशे पट्टिका परितो [2]द्व्यंशं प्रतिमुखमेवं प्रतिक्रमं सार्धैकांशे पट्टिका सार्धैकांशे [3]कण्टकशेषं वाजिनं पादबन्धमिति पादविस्तारं [4]तदर्धोच्छ्रायं वा मानमादाय त्रिभागावगाढमृजुमच्छिद्रं घनेष्टकाभिः कल्पयेत् ।

स्तम्भलक्षणम्

स्तंभाः षड्ढस्तायामा द्वादशाङ्गुल[5]विष्कम्भाः स्तम्भदशांशोनदीर्घा[6] उपरिष्टात्तालप्रकल्पितद्व्यङ्गुलान्यूनविष्कम्भा [7]दशांशोनायामाः वृत्तचतुरश्राष्टाश्र[8]षोडशाश्रपिण्डिकाकुम्भबोधिकावीरकाण्डाश्रिताश्चाष्टौ स्तम्भा भवन्ति । जालेष्टकापादै[9]र्भित्तय[10]स्त्रिविधा भवन्ति ।

स्तम्भविस्ताराण्युत्तराणि खण्डोत्तरपत्रबन्धे रूपोत्तराणि त्रीणि स्तम्भास्त्रिभागबहुलाः समनिष्कासाश्च । उत्तरस्तम्भविष्कम्भोत्सेधश्चतुर्धा भूतबहला [11]भागतुल्यविस्तारसमोत्सेधा भवन्ति । तदर्धोत्सेधा[12]श्चतुर्मार्गगा दण्डोत्सेधाः प्रस्तरपार्श्वानुगाः[13] स्युरुत्तरपट्टिकाद्वारानुभागाश्च भवन्ति । [14]अनुलाजयन्त्यौ वंशानुभा अनुमार्गधारिण्यः कपोतनिष्क्रमं त्रिदण्डमध्यर्धं वालिन्दं[15] पादोत्सेधसममर्धं त्रिपादं प्रत्युत्सेधस्तत्त्र्यंशसमनिर्गमं वाजिनं द्विदण्डं चतुर्दण्डं वा तस्योर्ध्वे षट् चत्वारः [16]परिवशाः प्रतिवाजिनतुल्यं वाजिनं वेदिकोपरि जालिकानन्द्यावर्तगुलिकागवाक्षकुञ्जरा[17]श्चतुरश्राद्यलङ्कारास्तत्र भवन्ति । पञ्जरविस्तारं त्रिदण्डं चतुर्दण्डं गर्भागारं चतुर्भागं वा नासिकाविस्तारं

---

1. च. पञ्चविंशद्वोत्सेधाद्द्वादशाङ्गुलदशांशानवसप्तांशं वा. . च. द्व्यंशमास्यं. 3. क. खण्डकल्कशेषं. 4. च B. उच्छ्रायमाहोपर्णकेन 5. च. विष्कम्भास्त्वथस्तम्भ. 6. च. दीर्धतपरिष्ठानां: 7. क. ग. दशांशेनायामाः. 8. च. पोडशाश्रमस्याष्टाश्रपूर्वाश्रभुंजुपिण्डका इत्यादि. 9. च. भक्तयः. 10. च. त्रिधा. 11. च. भारतुलात. 12 B. चतुर्मार्गाः. 13. ग. अनुगाद्युत्तर. 14. अनुलाजायन्त्यौ इति क कोशे न दृश्यते. 15. लिङ्गकादन्यत्र. 16. क. परशवः. 17. च. कुञ्जरच.

पञ्जरम्

[1]महानासिकाविस्तारं [2]दण्डं द्विदण्डं वा विमानविस्ताराष्टभागं [3]महाकर्णिका नासिकाविस्तारसमं कूटशालाविस्तारं द्विगुणायामं शालायामं हस्तिपृष्ठनासिविस्तारमलिन्दं विस्तारं भागमेव गृहपिण्ड्यः[4]। पादान्तरं द्विहस्तं त्रिहस्तं चतुर्हस्तं च कल्पयेत् ।

कवाटम्

स्तम्भायामं[5] वसुहीनं द्वारोत्सेधं तदर्धविस्तारं स्तम्भविस्तारं वस्वंशं कवाटबहुलं तदर्धं कवाटदण्डं कुण्डलश्रीमुख [6]पिञ्जरपुलकार्गलभ्रमरवलाहकाद्यलङ्कारयुताः कवाटा भवन्ति ।

सोपानानि

शिखराणि

बालवृद्धसुखारोहणार्थं समखण्डानि शयनानि पदार्थं त्रिपादसमस्थितानि सोपानानि भवन्ति । चतुरश्राष्टाश्र समवृत्तायामाश्चेति चतस्रः शिखरक्रिया भवन्ति । तासां पावकवर्णस्वरा[7]ग्निनयनमाहरेत् । त्रयोदशदशाष्टपञ्चलोकोदधिपङ्क्ति वसवोऽनुपूर्व्या स्तम्भविष्कम्भोत्सेधात् षोडशांशः ललाटे नयने पादार्धे पादाङ्घ्रिजानुनी कीर्णांशे द्व्यंशं कुर्यात् । वा [8]ललाटकुठारिजातावच्छित्तिध्वजावदेवं तद्युक्त्या कारयेदिति विज्ञायते ॥

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे विमानलक्षणविधिर्नामै-

[9] कत्रिंशोऽध्यायः ॥

---

## ॥ अथ द्वात्रिंशोऽध्यायः ॥

मूर्धेष्टकाविधिः

एवं कृत्वा आद्येष्टकविधानेन हुत्वा न्यक्षं दधित्यकं पीवरमार्यकमिति प्राच्यां याम्ये विवस्वन्तं भरतं [10]विश्वकर्माणं मरीचिमन्तमिति पश्चिमे मेत्रं [11]हित्वरं राजिष्मन्तं रमणकमिति उत्तरे क्षतारं महीधर[12]मुर्वेरोहं शेवधिमित्यभ्यर्च्य पृथक् पृथग्धुत्वा प्रभाते स्नात्वा शिल्पिनं सम्पूज्याचार्यमभिवन्द्य स्रग्वस्त्राभरणादिभिरलङ्कृत्याभ्यर्च्यारभेत् । समाः श्लक्ष्णाः दोषविवर्जिताः श्चेष्टकास्समाहृत्य प्रोक्षणैः प्रोक्ष्य धान्योपर्यहताम्बरे संस्थाप्याभ्यर्च्य वज्रेन्द्रनीलमरतक-

1. महानिर्व्यूहविस्तारं कादन्यत्र. 2 क. दण्डं. 3. क. सिंहनासिका. 4. पिण्ड्यः. 5. क. महीन. 6. घ. पञ्जर 7. छ. अग्निनयनाहताहृतयदद्रित्रित्रथत्रयोदश. 8. घ. अग्निनयनाहतयेदं त्रित्रयः त्रयोदश एतदादि एवमित्यन्तं क कोशे नास्ति. 9. एकपञ्चाशः खण्डः. ग. 10. ग. विश्वं. 11. ग. जित्वरं. 12. ग. दुर्वेरोहं.

कतवैडूर्यपद्मरागान् सुवर्णबद्धान् सुवर्णशकलानि वा "इन्द्रं प्रणवन्तं" "यमो दाधार" "ये ते शतं" "मिश्रवाससः" "ब्रह्मजज्ञान" मिति प्रागादि मध्यान्तं पञ्चरत्नान्याक्षिप्य श्रीसूक्तेनेष्टकाः संविमृश्य स्थिरराश्युदये शुभग्रहेक्षिते लग्ने ध्रुवसूक्तेन [1]प्रागग्रं देवमनुस्मृत्य पञ्चेष्टकाः सुदृढं संस्थाप्य सर्वरत्नमयं जातरूपमुपर्युपर्यर्पयित्वा सुधया परिलिप्य स्थूपिशूलं ताम्रेण दारुणा वा कल्पयित्वा प्रोक्षणैः प्रोक्ष्य सुदृढं संस्थाप्य कनिष्ठाग्रप्रमाणं स्थूप्यग्रं पद्ममुकुलाकारमधस्तात्पद्म[2]पुष्पाभं तदुपरि कुम्भरूपं वृत्तं चतुरश्रमष्टाश्रं[3] षोडशाश्रं वा कृत्वा तस्योपरि इलाकृत्यूर्ध्वे[4]दीपशिखारूपशिखायुक्तं महानासिकातः [5]किंपुरिमुखसंयुक्तं दिशासु दिग्देवातासु[6] इन्द्रं रुद्रं महाविष्णुं ब्रह्माणं वा सुधया कारयेत्। महानासीशिखाग्रेषु ताम्रेणाऽयसेन वा त्रिशूलान् कृत्वा स्थापयेत्। स्थूपिशूलप्रतिष्ठा.

तासु पद्मदलानि लतावृतानि[7] च कृत्वा तन्मध्ये [8]कोणे च [9]स्तम्ब[10]कर्णादीनि नीव्रे व्यालरूपं [11]गन्धर्वोद्वहनं इन्द्रनीलादि[12]कूटेषु [13]नासिकास्वन्तः पादं बहिः पादं कूटपीठमहानीव्रे [14]भूतान् हंसान् विद्याधरान् क्रीडारससमन्वितान् [15]नाना विभ्रमसंयुक्तान् प्रादक्षिण्यवशेन कारयेत्। जातरूपरूप्य[16]शुल्बान्यतमेन शिखराणि सर्वरत्नोज्ज्वलरूपाणि कारयेदिति केचिदृषयो वदन्ति। सिंहव्यालगजवृषहंसशुकचक्रवाक मुक्तादामकदलीक्रमुक सोमरूप लतारूप मकरवेदिकादण्डयक्षगन्धर्वसिद्धकिन्नरनागेन्द्रादीन् क्रीडारससंयुक्तान् [17]पादान्तरेष्वर्पयित्वालङ्कृत्य भित्तिभागेषु सर्वत्र [18]देवांशावतरणक्रीडाभावविधानेनाप्सरोयक्षगन्धर्वनागमुख्यैस्समन्वितं [19]चक्षुराह्लादकरं रम्यं मनोहरं यत्नतः कारयेत्। [20]क्लिष्टरूपकबन्धपिशाचब्रह्मराक्षसान् पाषण्डसभ्येतररोगार्तादिरूपोद्वेजनकान् क्वचिदपि न कारयेत्। भित्तिभागेषु सर्वत्र [21]द्वियवत्रियवयवायवहीनं वृतेः[22] तलनिम्नमुन्नतं वा सुधया लेपयेत्।

---

1. म. उत्तराग्रं वा देवदेवं. 2. A पत्र. 3. घ. अग्रं. 4. ऊर्ध्वरूप. घ. 5. किंपुरुष. क. 6. क. देवताः म. तासु. 7 क. प्रतानानि. 8 च. ज्ञ. तु. 9. घ. स्तम्भ. 10. B कर्णान् निव्रे.- छ. कर्णादीनिप्रे व्यालरूपं. 11 छ. गन्धर्वोद्वानं क गन्धर्वगानं. 12. क नीतेषु. म. कीलेषु. 13. छ. मुखानिके. 14. छ. प्रभूतान् सिंहान्. 15. क. अन्तर्विभ्रम. म. नृत्तविभ्रम. 16. छ. शुल्बातमेव. 17. म. अवान्तरेषु. 18. घ. देवदशांश. 19 म. चतुर्षु. 20. B. कुश्यकक्लिश्य. 21. क. त्रियवयवहीनं. 22. घ. वृत्तिः स्थल. क वृत्तंस्थल.

इष्टकापादविस्तारं पञ्चधा सप्तधा षड्धा विभज्यैकं स्तम्भनिम्नं तदष्टभागं पादाग्रमिष्टकापादविस्तारं तरु (?) पादानां तन्मूलविस्तारं उत्तरस्योत्तरस्य त्रिभागैकमुत्तराबन्धविस्तारं उत्सेधमुत्तराणामेवं योगबन्धयुतया सुधया सर्वत्र कारयेत् ।

सुधायोगः

[1]करालमुद्गकुल्मास [2]कर्ककीचिकर्णैः पञ्चविधचूर्णैः चतुर्भागिकं भस्म संयम्य चूर्णं द्विगुणशर्करायुतं शणवालुकायुक्तं जलकषायत्रिफलोदकक्षीर[3]माषयूषबन्धोदकैः त्रिभिः[4]मर्दयित्वा माषयूषक्षीरसहितं [5]शुद्धोदकेन शुद्धिं कृत्वा गन्धोदकेनालिप्य सुधया नानारूपक्रियां कारयेत् ॥

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे मूर्धेष्टकाविधानं नाम [6] द्वात्रिंशोऽध्यायः ॥

## ॥ अथ त्रयस्त्रिंशोऽध्यायः ॥

नलिनकादिविमानानि षण्णवतिरुक्तानि । तेषु नलिनकं देवाख्यं मानुषं

विमानभेदाः

ब्रह्मवृत्तस्वस्तिक [7]वापीप्रसादार्धचन्द्र शालीकरण पूर्वरङ्ग बहुचित्र गोधामुख पर्वताकृति महापद्म [8]नन्दीविशालाष्टाङ्गसोमछन्दचतुःस्फुट श्रीवृत्त नन्द्यावर्त श्रीप्रतिष्ठितक सर्वतोभद्राश्चाष्टादश विमानानि देवदेवस्य विष्णोः। तेष्वष्टावाद्या ब्राह्मणानां [9]चत्वारः क्षत्रियाणां शेषा विट्छूद्रयोः । [8]नन्दीविशालं दक्षिणे ग्रामादीनां पश्चिमे [10]अष्टाङ्गमुत्तरे सोमच्छन्दं पर्वताकृतिं[11] सर्वदिक्षु चतुःस्फुटं ग्रामबाह्योद्यानपर्वतनदीतीरेषु नन्दीविशालं सर्वतोभद्रं पर्वताकृतिं वा कारयेत्[12] । [13]ब्रह्मवृत्तं सर्वतोभद्रं श्रीप्रतिष्ठितकं वा ग्राममध्ये पञ्चमूर्तिविधानेन कारयेत् । अधस्तले [14]चतुर्द्वाराः चत्वारो गर्भागाराः । तेषु स्थितानासीनान्वा पुरुषादीनुपरि विष्णुं तदुपरि शयानं सपरिवारं देवीभ्यामृषिभ्यां वा कारयेत् ॥

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे विमानलक्षणस्थाननिर्देशो नाम [15] त्रयस्त्रिंशोऽध्यायः ॥

---

1. क. कृकराल. 2. कर्कक. 3. घ. माषबन्ध. 4. A. कुट्टयित्वा मांसगुलक्षीर. 5. A. शुद्धोदकेनालिप्य सुधया. 6. ग. 52 खण्डः 7. B. वापि. 8. A-B नदीविशाल. 9. B. चरन्त्यां. 10. B घ. विशालाङ्गमिति तत्र स्थाने. 11. अत्र पूर्वे इत्यधिकं क. कोशे. 12. ग. इति 53 खण्डः 13. घ. वृहद्वृत्तं. 14. घ B. चत्वारो गणगाराः चत्वारो गाभिगाराः छ. 15 ग, इति 54 खण्डः.

## ॥ अथ चतुस्त्रिंशोऽध्यायः ॥

पुरुषं स्फटिकाभं रक्तास्यनेत्रपाणिपादनखवस्त्रयुतं चतुर्भुजं शङ्खचक्रधरं देवीभ्यामृषिभ्यां जयभद्राभ्यां [1]व्याजकाभ्यां संयुक्तं दक्षिणेऽञ्जनाभं [2]पिङ्गाम्बरं धृतिपौष्णीभ्यां युतं सुरसुन्दराभ्यां वीज्यमानं सत्यं पश्चिमेच्युतं सुवर्णाभं शुकपिञ्छाम्बरधरं पवित्रीक्षोणीयुतं [3]गुहतुष्टिभ्यां व्याजकाभ्यां उत्तरेऽनिरुद्धं तरुणादित्यसंकाशं श्यामाम्बरमनन्ताध्यासीनं फणैः सप्तभिः पञ्चभिर्वाच्छादितमौलिं कुञ्चिताननं [4]विवृत्तैकपादं [5]वामजानुप्रतिष्ठितोत्तम्भितसव्यकरमनन्तालम्बितान्यं[6] महीप्रमोदायिनीभ्यां वराहनारसिंहाभ्यां स्वाहास्वधाभ्यां व्याजकाभ्यां [7]समन्वितमेवं च क्रमेण संस्थाप्य उपरि विष्णुं श्यामलाङ्गं चतुर्भुजं शङ्खचक्रधरं सर्वाभरणसंयुतं श्रीहरिणीभ्यां सुवर्णश्यामवर्णाभ्यां रक्तश्वेताम्बराभ्यां [8]वामदक्षिणकरधृतरक्तपद्मोत्पलाभ्यां प्रसारितान्यहस्ताभ्यां च [9]भृगुपुराणाभ्यां [10]प्रवालरजितवर्णाभ्यां श्वेतवस्त्रधराभ्यां किष्किन्धसुन्दराभ्यां व्याजकाभ्यां तदूर्ध्वेऽनन्तभोगशयनं स्थापयेत् । चतुर्मूर्ति[11]विधानेनोपरि नारसिंहं वाराहं वा स्थापयेत् । पञ्चमूर्तिकल्पः

सर्वत्रानपायिगणैः [12]सार्धमाचरेत् । देवीहीने पत्न्यपत्यहानिः मुनिहीने धर्मनाशः विष्वक्सेनहीने कुलोत्सादनं वीशहीने [11]रिपुवृद्धिः चक्रहीने [12]संसारोच्छित्तिः शङ्खहीने मौढ्यं ध्वजहीने कार्पण्यं यूथेशहीने भृत्यहानिर्भवति । तस्मादेतै[15]र्द्वारागरपालकैरर्चयेत् । उक्तानां विमानानां भेदालङ्कारमानानि भृगूक्तविधिना ज्ञात्वैवं कारयेदिति विज्ञायते ॥ परिवारकल्पनफलम्

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे पञ्चमूर्त्यालयविधिर्नाम

[16] चतुस्त्रिंशोऽध्यायः ॥



---

1. A व्याजनाभ्यां 2. क. पिङ्गलाम्बरधरं. 3: गुहेति B कोशे नास्ति· म. कीर्तितुष्टिभ्यां 4. म. विस्तृतैकपादं. 5. क. B आजानु. 6. म· असव्यं. 7. क. B समंचितं. 8. म. हस्तोद्धृत, 9. छ· रक्तश्वेताम्बराभ्यां· 10. क. प्रवालरजितवर्णाभ्यां· 11. विधानेषु· (तु?) 12. म. सार्धं सर्वमाचरेत्. 13. छ अरि· 14. म. संसारचक्रं. 15. B द्वाराद्वारपालैः. 16 ग. पञ्चपञ्चाशः खण्डः·

## ॥ अथ पञ्चत्रिंशोऽध्यायः ॥

ब्रह्मस्वरूपनिरूपणम्

अथ विश्वतश्चक्षुर्विश्वतोमुखाङ्घ्रिहस्तं विश्वात्मकं विश्वगर्भं विश्ववेत्तारं[1] विश्वेन्द्रियगुणाभासं विश्वेन्द्रियविवर्जितमनादिनिधनं व्योमाभं यत् [2]ज्ञातृ ज्ञेयं ज्ञानविहीनं ज्ञानघनं तदेव जाग्रत्स्वप्नसुषुप्तितुर्यावस्थानगं[3] बहिःप्रज्ञान्तःप्रज्ञ[4]प्राज्ञावस्थया वैश्वानरतैजसहृदयाकाशरूपेण[5] स्थूलं प्रविभक्त मानन्दं भुञ्जानं ब्रह्म [6]तुर्यं चतुष्पादमामनन्ति। तदेव ब्रह्म सत्त्वोत्कर्षनिकर्षाभ्यां प्राणिषु चतुर्धा भिद्यते[7] सत्त्वतः पादतोर्धतस्त्रिपादात्केवला[8]च्च धर्मज्ञानैश्वर्यवैराग्यविपर्याश्चतस्रो मूर्तयस्त्विमाः[9] भवन्ति।

ब्रह्मणो रूपकल्पनम्

[10]आसु मूर्तिषु कूटस्थः सूक्ष्ममूर्तिः सत्तामात्रः। सोऽत्र परं ब्रह्म विष्ण्वाख्यः। अन्या मूर्तयः पुरुषसत्याच्युतानिरुद्धाख्या अभ्यर्च्या भवन्ति। अत[11]श्चतुर्व्यूहात्मनो ब्रह्मणस्सर्वगतस्य निरवयवस्य लिपेरिव कल्प्यानि रूपाणि भवन्ति। भक्त्या नियोजितौत्सुक्याद्धृद्युत्पन्नस्तत्तदाकृतिः तत्तद्वाञ्छितान् ददाति। [12]ज्ञानगम्यस्याकर्तुरविकारिणः शुद्धस्याहेतुकस्यात्मनः पृथक्त्वं घटाकाशवत्। [13]तस्मादग्नेः विस्फुलिङ्गा इव [14]कालाग्निमेषा इव ज्ञानांशा [15]देवा भवन्ति। [16]अंशैश्च [17]पालयन्ति लोकान्। तानेव पूजयन्त्येते भृग्वादयः।

प्रकृति श्रीः

"मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरं"[18]इति तत्क्लेशसंश्लेषाल्लोकयात्रा मूला देवी। तस्मात्तमनयैव सह देवेशमर्चयन्ति परमर्षयः। सा देवी श्रीरिति प्रोक्ता सा प्रकृतिः [19]सा शक्तिः तदभिन्नाः स्त्रियः सर्वाः पुरुषास्त[20]दभिन्नास्सर्वे। [21]ताभ्यां स्थितिः। तस्मात् [22]सहैवार्चयेत्। ताभ्यां यद्वर्तितं [23]संसारं

---

1. A विश्ववेत्तृ. 2. B यज्ञानयज्ञेयं. 3. B स्थागं. 4. छ. प्रज्ञप्राज्ञावस्थायाः. 5. क. विभक्तरूपं. 6. क. तुर्ज्ञं. म. तुरीयं. 7. B विभज्यन्ते इति. 8. म. धर्मज्ञानवैराग्य. 9. छ. स्वस्तिभाचरन्ति. अत्र पङ्क्तिद्वयं ख कोशे लुप्यते. म. मूर्तयस्स्वस्तिमलः 10. A एतासु. 11. भ. व्यूहात्मनः 12. ख. कर्तुरविकारिणः. 13. तस्मादिति B क. घ. कोशेषु नास्ति 14. अत्र स्थाने-निमेषकेषु इति B कोशेषु दृश्यते. क. हरेरावेशांशाः. 15. B देवांशाः. 16. क. अंशैरेव. 17. पालिनं. 18. A. तत्संश्लेषात्. छ B. B छ लोकयात्रामूला तस्मात्तयैव. 19. क. सा शान्तिः. 20. B तदभिन्नाः न दृश्यते. 21. B भक्ताभ्यां. 22. B तस्मात्सहैव. छ तया सहैव. 23. म. संसारचक्रं यत्सर्वलोकसारं.

चक्रं यत्सर्वलोकसारं सर्वप्राणिहृदिस्थितं हंसाख्यं [1]चेतनारूपं तच्छंखं यः पृथिव्यादिपञ्चात्मा सर्वदेवमयः छन्दः पक्षः [2]सर्वगः सर्वभूतात्मा अनादिनिधनः सुवर्णो गरुत्माख्यः पृथ्वीवायुसंयोगाच्चापश्शार्ङ्गं[3] तेजोवायुमयो बाणो विद्याविद्ये इषुधी लोकालोकाद्रिः खेटकः कृतान्तो नन्दकः [4]देहान्तरात्मा सर्वेषां दण्डो दण्डः ध्वजः [5]अपराजितत्वाधारः भेरी शब्दात्मकः [6]लोकसन्तानभित्तिः नागः अश्वः वायुसमवाय[7] इति श्रुतयो [8]गृणन्ति । तस्मादेतैस्सहैवोभयत्र [9]विहिते [10]देवमर्चयेत् ।

मुमुक्षुर्विजने देवेशं शङ्खचक्रधरमेव [11]अन्यत्रालक्षयेत् । पञ्चबेरसमायुक्तं गर्भागारे स्थापयेत् । देवीभ्यामृषिभ्यां वा ब्रह्मेशानाभ्यां भृगुपुण्याभ्यां वा अर्चितं [12]निधीन्द्राभ्यां नागेन्द्राभ्यां वा मया वीशेन [13]युक्तं वा सूर्यचन्द्राभ्यां ख्यातीशपद्मापितृभ्यां वा भृगुद्रुहिणाभ्यामर्चितं वा संकर्षणप्रद्युम्नानिरुद्धसाम्बैः[14] पद्मया [15]वासुदेवमेवं स्थितमासीनं वान्यतमेन संस्थाप्य [16]ग्रामनगरादीनामृद्धयै पूजयेत् । नान्यथैतदिति विज्ञायते ॥ स्थानभेदेन रूपभेदः

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे भावनाकल्पो नाम

[17]पञ्चत्रिंशोऽध्यायः ॥



## ॥ अथ षट्त्रिंशोऽध्यायः ॥

पञ्चमूर्तिविधानेन ग्राममध्ये [18]वा प्राच्यां स्थानकं शयानं वा दक्षिणपश्चिमयोरासीनं स्थानकं वा उत्तरे शयानमासीनं वा आग्नेये स्थानकं नैर्ऋते वाराहं वायव्ये नारसिंहमैशान्ये हरिशङ्करं विजने योगासनं नद्युद्यानसमुद्रपार्श्वे शयानं राष्ट्रान्तरे नदीसङ्गमे स्थानकं शयनं वान्यत्र सुखासनमेव संस्थापयेत् । पञ्चमूर्तिविधिः

1. म. चेतोरूपं. 2. घ. सर्पगः क सर्वभक्षः B सर्वभः. 3. क शान्तः A ससाङ्ग:—4. क. देहवानन्तरात्मा. 5. A परापराजित. 6. A लोकसवितते. म. लोकसंसरमितिः(?) 7. छ. वाग्व. 8. छ. गृह्णन्ति. 9. घ विहीने 10. B देवीं. म. सर्वदेवं. 11. B अत्र A अत्रालये. 12. छ. मिथयेन्द्राभ्यां. B निधियेन्द्राभ्यां. ख निधीशेन्द्राभ्यां. 13. क. संयुक्तं. 14. छ. अनिरुद्धैस्साम्बरैः. 15. A वासुदेवं दैविकं स्थितं. 16. म. ग्रामादीनां मध्ये स्थानकं. 17. ग. इति षट्पञ्चाशाःखण्डः 18. म. पश्चिमे. B आसमानं वा.

गर्भागारसमं पादमर्धविहीनं द्वारसमं पादाधिकमर्धाधिकं पादमानं यजमानसमं वा ध्रुवायामं ध्रुवायामषड्भागं [1]पीठमुत्तममर्धाधिकं द्विभागं मध्यममधमं द्विभागमित्यङ्गिराः। गर्भागारत्रिभागैक[2]मासने पीठविस्तारं [3]द्वारायामषड्भागमुच्छ्रयं तत्पादहीनं देव्योः पीठोच्छ्रय[4]मृत्विग्भागं विभज्य एकेन [5]पादं [6]त्रिभिर्जगती द्वाभ्यां कुमुदमेकेन केसरं पञ्चांशैः कर्णिकां [7]पट्टिके [8]द्वाभ्यामेवं सिंहासनविधानेन कल्पयेत्। आयामं द्वात्रिंशांशत्रिभागं[9] शयनोच्छ्रयं चतुर्भागं विस्तारं शेषं युक्त्या कारयेत्। स्थानके द्वादशांशं पद्माकारं तदर्धोच्छ्रयम्। अर्चायास्तु भुवंगसमं त्रिवेदिसहितं मण्डलं[10]चतुरश्रां वा अथवैकामेव वेदिकां कारयेत्।

पीठकल्पनम्

यदा ग्लानिर्धर्मस्य परिपालनाय नारायणाद्भगवतः [11]प्रत्यंश रूपाणि [12]युगे युगे प्रजातानि भवन्ति। तानि रूपाणि संस्थाप्यार्चयेत्॥

भगवदवतारहेतुः

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे पञ्चमूर्त्याद्यालयस्थाननिर्णयध्रुवबेरमानविधिर्नाम [13] षट्त्रिंशोऽध्यायः॥

---

## ॥ अथ सप्तत्रिंशोऽध्यायः ॥

मत्स्य कूर्म वराह नारसिंह वामन जामदग्न्यराम दशरथराम [14]कृष्ण कल्किन इत्येतान् बृहद्वृत्तविमाने गर्भागारं द्वादशधा विभज्य आग्नेय्यां पूर्वभागे तप्तहाटकसन्निभं रक्तपद्मारूढं वितस्तिविस्तृतं मत्स्यरूपं पश्चिमे अञ्जनाभं[15] षोडशाङ्गुलविस्तृतं तदर्धोच्छ्रयं कच्छपं चतुरश्रपीठसंस्थितं [16]वराहवदनास्यं चतुर्भुजमुर्व्याश्रितोत्सङ्गं[17] पीताम्बरधरं शङ्खचक्रयुतं नरवराहरूपं [18]दंष्ट्राकरालसिंहास्यं सटाटोपं मुक्ताभकं (?) चतुर्भुजं वीरासने संस्थितं नारसिंहं वामनं श्यामाङ्गं ब्रह्मचारिव्रते स्थितं जामदग्न्यं दूर्वाभं रक्तवल्कलसंवृतं [19]टङ्कहस्तं

दशावतारस्वरूपम्

---

1. A-B पीठमानं द्वारषड्भागात्पीठं इत्यधिकम्. 2. छ. आसनं. 3. ग धारायाम. 4. B ऋत्विग्विभज्य. 5. छ पादुकं. 6. छ त्रयैः 7. छ पट्टिकां. 8. छ. द्वाभ्यां द्वाभ्यामेवं. A द्वाभ्यां शिष्टमेवं सिंहासनं. 9. छ द्विभागं. 10. B. चतुरश्रीशश्वर्धवेदिकां कारयेत्. 11. ख. प्रत्येकं रूपाणि. 12. A तत्कर्मानुरूपाणि युगे. 13. ग सप्तपञ्चाशः खण्डः 14. बलभद्रकृष्ण. ग. हलिकृष्ण. क. 15. B अञ्जनागं 16. म. वराहवदनं श्यामलं, 17. छ सितोत्सङ्ग. 18. क दंष्ट्राकरालमास्यं B. दंष्ट्राकरालास्यं. 19. क नगस्थं.

जटाधरं रामं रम्यविभूषणं चापबाणधरं सीतादेव्यासमन्वितं सिंहासनसमारूढं [1]कृष्णं यौवनशालिनं नीलकुञ्चितकुन्तलं लीलायष्टिधरं हलिनं [2]शङ्खाभं नीलाम्बरेण सीरिणं बलभद्ररामं कल्किनं रक्तसप्त्यधिरूढं भिन्नाञ्जनाभं कवचोज्ज्वलसन्नाहं करवालकरमेवमाग्नेयादीशानान्तं[3] [4]द्वारपादं विहाय नवभागेषु दशावतारान् संस्थाप्य[5] पश्चिमे भागे अनिरुद्धमादिभूतमनन्तात्मानं स्थापयेत् । एतेषां [6]पृथक् पृथग्वा विमानं कल्पयेत् । एकत्र स्थापिते सर्वदानफलं सर्वयज्ञफलं प्राप्य विष्णुलोके महीयते इति विज्ञायते । अथ पर्वतोत्सङ्गे नदीतीरे विष्णुच्छन्दविमाने मत्स्यकूर्मौ सहैव पूर्ववत् । ब्रह्मेशाभ्यामर्चितं सर्वतोभद्रे अङ्गनाकारे सोमच्छन्दे वा अरण्ये वाराहं मह्याश्लिष्टं शयानमासनं स्थानकं वा वीशवासुकियुतं पुण्यधर्माभ्यां पूजितं पुष्टिकाकुमुद्वती व्याजने कुड्यद्वारोभयतः ब्रह्मश्रीः राजश्रीः चत्वारो वाहनं वेदाः शैषिकस्तु पुलिन्दाख्यो मुनिः शेषं युक्त्या कारयेत् । पर्वताकारे नन्द्यावर्तसर्वतोभद्र पौष्टिकोर्जालपत्रस्वस्तिकान्यतमे उपरितले नृसिंहं स्फटिकोपलमध्येवोत्कुटिकासनं स्वस्तिकासनं वासीनं जानुप्रसारितोत्तम्भद्विबाहुं शङ्खचक्रधरं वामदक्षिणोत्तम्भजानुस्थैकहस्तं प्रसारितावलम्बितोरुस्थैकहस्तं शङ्खचक्रधरं आसने कुञ्चितैकाङ्घ्रिप्रसारितान्याङ्घ्रिरूरुसमवरदैकहस्तं शङ्खचक्रधरं वा सिंहासनं चतुर्भुजं ब्रह्मेशाभिष्टुतं वा देवीभ्यामृषिभ्यां यज्ञतीर्थाभ्यां ब्रह्मेशाभ्यां सामभूतीशाभ्यां वाहनशैषिकाभ्यामासीनं गारुडभौतिकसोमच्छन्द चतुःस्फुटाद्यतया वामनं त्रिविक्रमं वा श्यामलाङ्गं द्विबाहुं ब्रह्मचारिव्रते स्थितं वामहस्तधृतछत्रमन्यहस्तधृताषाढं कनकशङ्खिलाभ्यां मुनिभ्यां युतं वामनाकारं त्रिविक्रमं जानुसमं नाभिसमं वोद्धृतैकपादं ास्थतदक्षिणचरणं चतुर्बाहुं द्रुहिणक्षालितालंबजह्नुकन्यायुतोद्धृतचरणं बलिं वामनयुतं वीशार्दितं भृगुं चन्द्रादित्यनमस्कृतं श्रीप्रतिष्ठितके महाशङ्खे वा जामदग्न्यं श्रीप्रतिष्ठितके महाशङ्खे वा रामं सीतासौमित्रियुतं हनूमद्भरताभ्यां स्वस्तिके चतुःस्फुटे वा बलभद्ररामं गणिकाविहारकुम्भाकार त्रिकूटमहाहंसान्विते रुक्मिणीसत्यभामाभ्यां रुक्मिणीवीशाभ्यां वा संयुतं श्रीदाम्ना मायूरके कूर्मे चत्वरे वा कर्किणं पूर्ववत् स्थापयेत् । वैराग्ययोगैश्वर्येप्सुः मत्स्यकूर्मौ राजराष्ट्रविवृद्धये वाराहं शतृदस्युविनाशायापराजितत्वकाङ्क्षी नृसिंहं

1. क, हलिनमित्यत्राधिकं. 2. B, शङ्खाभेन. 3, क. प्रागन्तं. 4, दश B. 5, A संस्थाप्य मध्ये पश्चिमे. 6. एतेषां प्राग्विमानं.

राज्यलाभाय विद्यार्थं वामनं त्रिविक्रमं च जामदग्न्यं धर्मवृद्धिसुखाकाङ्क्षी रामं योगार्थी सार्वभौमकामो बलभद्ररामं भोगैश्वर्यसुखप्रीत्यै कृष्णं पापौघविघ्नाय कल्किणं पूजयेदिति विज्ञायते ॥

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे दशावतारविधिर्नाम [1] सप्तत्रिंशोऽध्यायः ॥



## ॥ अथाष्टत्रिंशोऽध्यायः ॥

प्रकृतिपुरुषयोः- स्वरूपम्

प्रकृतिपुरुषा[2]वुभावनादी[3]। ताभ्यां लोकप्रवर्तनम् । [4]विकार गुणास्सर्वे[5] प्रकृतिसमुद्भूताः । कार्यकारणकर्तृत्वे हेतुः प्रकृतिः । सा प्रकृतिः श्रीरिति व्याख्याता । पुरुषः सुखदुःखानां भोक्तृत्वे हेतुः । [6]प्रकृतिस्थः प्रकृतिजान् गुणान् भुङ्क्ते । प्रकृत्यैव सर्वाणि कर्माणि[7] । तस्मात्सर्वप्रयत्नेन श्रियं देवीं पूजयेत् । [8]सा च प्रसादानुग्रहपरा वैष्णववत्सला । ततःश्रियं तु साधयेद्यत्नादामृत्योः श्रियमेव काङ्क्षेत । दुर्लभां [9]नैनामवमन्येतेत्येवमाद्याः श्रुतयो [10]गृणन्ति ।

श्रीपूजाविधिः

श्रीस्वरूपम्

तस्माद् ग्रामनगरपत्तनादिषु नृपवेश्मसु [11]द्विजोदवसितेषु च पूजयेत् । श्रीवत्सनन्द्यावर्त[12]नन्दीविशालोत्फुल्लसर्वतोभद्रान्यतमे मन्दिरे इन्दिरां सुमुखीमाबद्धपट्टमुकुटां मुक्तालङ्कार[13]मालिकां सर्व[14]रत्नकर्णिकां मुक्ताभरणविभूषितगात्रिकां [15]बद्धपीनस्तनीं [16]कृशमध्यां पृथुतरनितम्बबिम्बां श्वेतकौशेयवस्त्रां देवीं देदीप्यमानमेखला[17]मादियौवनसौभाग्यां धृतहस्तसितपङ्कजयुगां [18]वरदैकहस्तां धृतरत्नमञ्जरीं वा द्वाभ्यां हस्ताभ्यां धृतकमलां हृद्यां सहस्रादित्यसमप्रभां मन्दारमालालङ्कृतां देवीं पद्मासनसमारूढां छायायां कल्पतरोः [19]संस्थाप्य तस्याः पार्श्वे

---

1. ग. अष्टपञ्चाशः खण्डः. 2. B. उपेतावनादी. 3. B. अनादिनिधनाभ्यां. 4. B. विदुः. 5. म. प्रकृत्युत्पन्नाः A प्रकृत्यापन्नाः. 6. A प्रकृतिस्थः पुरुषः. 7. A. क्रियमाणानि करिष्यमाणानि च भवन्ति. क्रियमाणानि तस्मात्सर्वेत्यादि B कोशपाठः—8. A. B. सा च प्रसन्ना दासानुग्रहपरा 9. छ. तैः A तां. 10. छ. गृह्णन्ति. 11. A. द्विजोदवसितेषूद्यानेषु च. 12. क. नदीविशाल. 13. A मौलिकां. 14. ग. रत्नमण्डित. ब. 15 B. गात्राबद्धपीन. 16. छ. अङ्कुश. 17. B. अनादियौवन. 18. छ. अभयवरदैक. 19. क. संस्थापितां.

देवेशं तामुपलालयन्तं संस्थाप्य देव्याः पार्श्वे [1]स्यमन्तककौस्तुभचिन्तामणीन् शंखपद्मनिधी संस्थाप्य [2]क्ष्माविभूतिशान्तिकान्तिभिः व्यजनहस्ताभिरिन्द्रशेवधिपाभ्यां द्वारपालकाभ्यां रक्तपङ्कज[3]मध्ये स्थापयेत् । एवं [4]स्थपितायां देवदेव्यामभूत्यसमृद्ध्यलक्ष्म्यो नश्यन्ति । अथ वा पार्श्वयोर्गजाभ्यां उद्धृतकुम्भजलास्नात्रयुतमौलिकां वा स्थापयेत् । पुण्या प्रजा धनायूंषि यशः श्रीः[5]प्रज्ञा योगर्धयश्च भविष्यन्ति । अतः सम्यक् प्रयत्नेन श्रियं संस्थाप्यार्चयेदिति विज्ञायते ॥

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे स्वतन्त्रलक्ष्मीलक्षणं नाम
[6] अष्टत्रिंशोऽध्यायः ॥

## ॥ अथैकोनचत्वारिंशोऽध्यायः ॥

अथातः [7]परिवारालयविधानम् । मूलागारविस्तृतसमं पादाधिकमर्धाधिकं वा परितः प्राकारं मण्डपं वा पुरस्ताद्द्विगुणं तन्मध्ये वाहनागारमुत्तरे तत्सूत्रे [8]शैषिकावासं गरुडगोपुरयोर्मानं यावत्तावद्गोपुरचक्रयोः तावच्छङ्खध्वजरवमहाभूतानामेवं द्वित्रिचतुःपञ्चषट्सप्तप्राकारान् कल्पयेत् । सप्तप्राकारमत्युत्तममेकं त्वधमाधमम् । गर्भार्धं परिवाराणामायतनम् । यद्यद्रूपं [9]ध्रुवरूपं तद्वत्परिवाराणाम् । सेनेशमासीनं कुर्यात् । सर्वत्र शयने सर्वेषां स्थानकमासीनं वेति केचित्[10] । ब्राह्मणैव वीशमन्येषां ध्रुवद्रव्येण कारयेत् । वीशं रविं गुहं विघ्नं धिषणां ज्येष्ठामश्मनैव कारयेदिति भृगुः । गर्भागारद्वारे मणिकसेन्ध्ये द्वितीये[11] तापस[12]वैखानसौ सोपाने मध्ये श्रीभूतं विमानस्य बहिः प्राच्याद्युत्तरान्तं [13]न्यक्षविश्वकर्ममित्रक्षत्तॄन् इन्द्राग्नियमनीलवरुणवायुकुबेरेशान् क्रमेणैव गोपुराद्दक्षिणे ब्रह्माणं वामे किष्किन्धं तद्बहिः वक्रतुण्डानन्तौ रविभौममन्दहेमश्यामसितभृगुसोमरुद्रान् प्रागादीशानान्तं तृतीये गुहहवीरक्षकदुर्गारोहिणीमातृधिषणाज्येष्ठापुष्परक्षकसप्तर्षिमहाभूतबलिरक्षकान् क्रमेण स्थापयेत् । मूर्तिभेदप्रतिष्ठाचेत्तत्रोक्तविधिना कारयेत् । अत्र

परिवारविधानम्

---

1. घ. सनन्दकौस्तुभ झ. समन्दक. 2. म लक्ष्मीविभूति. 3. म. मध्यमे.
4. स्थापिते देवदेव्या. B. 5. क. योगर्धियश्च. घ. देवदेव्यामैश्वर्यसमृद्धिस्त्वाहृता अलक्ष्मीर्नश्यति
6. ग. इत्येकोनषष्टिः खण्डः. 7. म. परिवारविधानम्. 8. म. शैषिकागारं. 9. यद्ध्रुवाणां रूपं.
10. छ. केचिद्वदन्ति वीशमन्येषां. 11. क. द्वितीये द्वारे. 12. म. सिद्धिदौ.
13. न्यक्षमित्यादि द्वितीयान्ताः पठयन्ते क कोशे.

[1]सूत्रप्रदर्शितविमानानां परिवाराणां [2]मानालङ्कारभेदानि तन्त्रे कार्त्स्न्येनोक्तानि। वर्णहीनं [3]वोपलजम्। [4]वर्णयुक्ते नाहाद्यवहीनं (?) प्रकल्प्य वर्णं योजयेत्। आयुः-श्रीकीर्तिवृद्धिदं सौम्यं सर्वकामफलप्रदं स्थानकं पुण्यवृद्धिदमासनं शयनं योगैश्वर्यप्रदं तस्मात्स्थानकसुखासनशयनयोगासनान् क्रमेणाश्रमिणः कुर्वन्तीति **भृगुः**। तस्मात्सम्यक् परीक्ष्येच्छानुरूपं कारयेदिति [5]विज्ञायते ॥

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे परिवारालयविधानं [6]नामैकोनचत्वारिंशोऽध्यायः ॥

## ॥ अथ चत्वारिंशोऽध्यायः ॥

अथ महापूजारूपकल्पनं व्याख्यास्यामः। महामूर्तिमायुःश्रीकीर्तिमिच्छन् शिलया प्रजापुण्यवृद्धिमिच्छन् ताम्रेण योगैश्वर्यसुखार्थी दारुणा सुवर्णभूम्यादीच्छन् मृण्मयेन कल्पयेत्। महारूपं मृदा चोपलैरेव कारयेत्। तस्य पूर्वं [7]मृदाहरणात् शूलग्रहणं कारयेत्। [8]शुभर्क्षे पूर्वोक्तगुणसम्पन्नं गुरुं स्रग्वस्त्राभरणादिभिरलङ्कृत्यानुज्ञाप्य 'जितं त' इति भगवन्तं प्रणम्य 'प्रतद्विष्णुस्तवत' इति देवागारं प्रदक्षिणीकृत्योक्तलक्षणसंपन्नं शिल्पिनमम्बरादिभि[9]रामन्त्र्य वास्याकुठारादीनाहृत्य[10]शैषिकचक्रौ सप्तविंशतिभेदैरभ्यर्च्यालङ्कृत्य यानमारोप्य पूर्ववद्गत्वोक्तलक्षणसम्पन्नं द्रुममाश्रित्य संशोध्य 'वृक्षराजं देवावासं सुशाखिनं विरिञ्चि[11]निर्मित' मिति एतस्योत्तरे अमितं पश्चिमे अनपायिनं [12]परश्वादि 'भवते भवा' येत्युक्त्वा दारुचक्रान्तरे अभ्यर्च्य अमिताङ्घ्रिपयोर्मध्येऽग्निं समाधायाघारान्ते अतो देवादि[13] वैष्णवं रौद्रं ब्राह्मं कौबेरं मूलहोमं च हुत्वा भूतेभ्यो बलिं दत्वा सहस्रशीर्षादिना तरुमभिमन्त्र्य[14] गुरवे दक्षिणां दत्वा पुण्याहं वाचयित्वा तन्मूलं 'सोमं राजान' मिति घृतेनालिप्य 'शन्नो देवी' रिति क्षीरेण च अर्घ्याचमने[15] दत्वा [16]अशीर्भिराघोष्य 'विष्णुस्त्वां

महापूजारूपकल्पनम्

दारुसङ्ग्रहः

1. क. सूत्रे. 2. छ. नामालङ्कारभेदानि तन्त्रैकासौम्येनोक्तविहीनं वा उपलक्षणं. 3. A वौपलक्षणम्. 4 क. वर्ण युक्तमन्यविहीनं. 5. A इति काश्यपः 6. ग. इति षष्टितम.खण्डः 7. B मृण्मयार्थ छ. दारुणा 8. छ. शुभर्क्षे शयन नक्षत्रे 9. A अलङ्कृत्याभिमन्त्र्य. 10. छ हृत्वा. 11. B निर्मितममितमिति. 12. छ. पार्श्वयोः भूर्भुवस्सुवरित्युक्त्वाऽभ्यर्च्य दारु छ. पार्श्वादेर्भवति. B भवस्येत्युक्त्वा दारुचक्रान्तरे 13. म. B. वैष्णवमिति न दृश्यते अतो देवादीति न दृश्यते. 14. A अभिवन्द्य. 15. क. आचमनानि 16. वाद्यैराघोष्य.

रक्ष'त्विति प्रतिसरां बध्वा प्रभाते स्नात्वा बलिं प्रक्षिप्य [1]पार्श्वे 'वृक्षराजाय देवावासाय [2]सुशाखिने [3]विरिञ्चिनिर्मिताय [4]सुपत्राय सुपुष्पाय वनस्पतिभ्यो द्यावापृथिवीभ्यां स्वा' हेति व्याहृत्यन्तं हुत्वा [5]विष्णवे श्रीधराय वराहायोर्वीसन्धारणाय सर्वव्यापिने श्रियै हरिण्यै ख्यातीशाय चिरायुषे ब्रह्मणे स्थाणवे [6]सर्वदर्शिने चक्रायामिताय देवेभ्यो ग्रहेभ्यो नागेभ्यस्स्वाहेति व्याहृत्यन्तं हुत्वा अग्निं विसृज्य परश्वादीनभ्यर्च्यादाय 'रुद्रमन्य' मित्यग्निमुपस्थाय 'नमो वरुणः शुद्ध' इति जलेनाप्लाव्य प्रदक्षिणीकृत्य प्रत्यङ्मुखः स्थित्वा [7]आत्मानमच्युतं ध्यात्वा 'भवते भवा'येति[8] वृक्षस्य दक्षिणे 'सोमं राजान' मिति [9]पश्चिमे '[10]नाथपा'ले त्युत्तरे 'प्रस'सेति प्राच्यां छेदयित्वा पतनादीनुपलक्ष्य मुखं पार्श्वं पृष्ठमिति ज्ञात्वा त्वगादीनुन्मुच्य सारमादाय 'वसोः पवित्र' मिति [11]करीषेणालिप्य [12]ध्वजपिञ्छादिभिरलङ्कृत्याघोष्य [13]रथादीनारोप्यागारं गत्वा अमितानपायिनौ संस्थाप्य देवेशं प्रणम्य शुभाशुभं ज्ञात्वा शान्तिं हुत्वा आरभेदिति[14] विज्ञायते ॥

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे महापूजारूपकल्पनं नाम [15] चत्वारिंशोऽध्यायः ॥

## ॥ अथैकचत्वारिंशोऽध्यायः ॥

शूललक्षणम्

अथ शूललक्षणम् । [16]प्रोक्षणैः प्रोक्ष्य अतो देवादिना अग्रं 'रुद्रमन्य' मिति [17]मध्यं 'ब्रह्मजज्ञान'मित्यधस्तादभिमृश्य गोदानसूक्तेन [18]वास्येन लक्षयेत् । पश्चाच्छिल्पी भगवन्तं [19]ध्यात्वा ऊर्ध्वभागे दक्षिणे [20]दक्षिणं वामे वामकरं मध्ये वंशदण्डमधोभागे तथा । [21]पादादूरुदण्डायामं षड्विंशत्यङ्गुलं जान्वोर्भागं जङ्घे वा ऊरुसमे चरणौ [22]जानुसमौ पार्ष्णी चतुरङ्गुले पुरस्ता[23]दादित्या-

1. B.तत्पात्रप्लवपुष्पैः वृक्ष 2. B शाखिन इति पाठः. 3.ग. इदं नास्ति. 4. B सुक्षत्राय. 5. इतः प्रभृति पश्चाद्व्याहृत्यन्तं गलितं ख कोशे. 6. A सर्पाशिने. 7. आत्मनि B. 8. B. भरदेवेति. 9. A. प्राङ्मुखः. 10. ख. अर्धपात्रेति 11. छ. कर्षेण सर्वत्र च. 12. म. इत आरभ्याघोष्येत्यन्तं न दृश्यते. 13. रथादिना B. 14. इदं क कोशमात्रे दृश्यते. 15. ग. इति एकषष्टिः खण्डः. 16. क. दारु प्रोक्षणैः 17. छ.मध्यमं 18. वास्येनेति क कोशे नास्ति. संलक्ष्येदित्यस्ति. 19. क.सह ध्यात्वा 20. क. दक्षिणं करं. 21. क. पाददण्डमूरु. 22. छ. अर्धजानु. 23. क. अङ्गुलं B. पुरस्तादित्यङ्गुलं

ङ्गुलन्नूरू जङ्घे च भवत इत्यङ्गिराः । कटिदण्डायामं चतुर्यवाधिकं ऋत्विक्परिणाहं क्रियाङ्गुलं कीलकं शिखायामं विस्तारमर्धाधिकाङ्गुलं पलाशमुकुलोपमं वंशदण्डं चतुरश्रं विस्तारं भागायाममश्विनीयुतं षष्ट्यङ्गुलं वक्षोदण्डायामं द्वात्रिंशदङ्गुलं बहुलमर्धाधिकं तालं विस्तारं पर्वपार्श्वयोर्भुजभेदेन [1]शिखाः कार्याः । शिखायामं कीलकं तदर्धविस्तारं वक्षोदण्डं त्रिभिश्छिद्रैः तद्वत्कटिदण्डं च । पार्श्वदण्डायामं प्राजापत्यविस्तारमर्धाधिकं त्रिमात्रमूर्ध्वाधश्शिखामानं कीलकं बाहुदण्डायाममङ्गनायुतं [2]त्रिष्टुप् प्रकोष्ठदण्डायाम-मेकोनविंशदङ्गुलं भुजनाहं[3] प्रादेशपरिमण्डलं प्रकोष्ठं वस्वङ्गुल[4]स्रुववदानुपूर्व्येण कार्श्यं भवति । [5]जाम्बूनदरौप्यशुल्बा[6]न्यतमैर्वा अधिकप्रादेशेन पाणितलङ्करोति । ऊरुमूल-परीणाहमृत्विगङ्गुलं पृष्ठफलकामानं प्राणायामाङ्गुलं वस्वङ्गुलं वा करोति । [7]अर्धाधिक-पञ्चाङ्गुलं चतुरङ्गुलं त्र्यङ्गुलं विस्तारं रुक्मरूप्यशुल्बताम्राणामन्यतमेन मौलिदण्डं रुक्मरूप्यताम्रान्यतमेन शूलं भवितव्यमित्याचष्ट भृगुः ॥

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे दारुशूललक्षणविधानं नामैक-[8]चत्वारिंशोऽध्यायः ॥

## ॥ अथ द्विचत्वारिंशोऽध्यायः ॥

[9]स्थानके चतुरश्रमासनेष्टाश्रं शयने वृत्तमेवं कारयेत् । मेढ्रादानाभेश्चतुरश्रं तद्ब्राह्ममिति [10]नाभेर्हिक्कान्तरमष्टाश्रं [11]भगवद्भागमिति [12]हिक्काया मूर्ध-पर्यन्तं वृत्तं [13]त्रैनेत्रमित्येव [14]क्रमं शूलमित्यात्रेयः। पौराणिकेपि पुराणं यत्तदेव कुर्यात्। अन्यथा राष्ट्रस्य यजमानस्य राज्ञो महत्तरो दोषो भवति। देवीनां वंशायामं वेदाधिकं शक्वरी पार्श्वायामं रसाधिकं [14]त्रिंशदङ्गुलं [15]वक्षः चतुर्विंशदङ्गुलं[16] विस्तारं रसं तदर्धं बहुलमर्धाधिकं द्विमात्रं [17]शिखायाममध्यर्धविस्तारं कट्यायाममृत्विग्विस्तारं रसमुत्सेधं कीलकं

(शूललक्षणविस्तरः) (पौराणिकस्थले विशेषः) (देव्यादीनां विधिः)

1. छ. शिखरकार्य. 2. क. त्रिकं प्रकोष्ठ. B. अनुष्टुप् प्रकोष्ठ 3. छ. नाभं. 4. ग. स्रावानुपूर्व्येण. 5. B. नेत्यत्राधरत्रिकं. 6. क. B. तामोर्धाधिक. 7. अर्धाङ्गुलं वा करोति इत्यधिकं घ. कोशे. 8. ग. इति द्विषष्टितमः खण्डः. 9. आसनभेदानीत्यधिकं छ. कोशे. 10. A. छ. नाभेरष्टाश्रं 11. छ. भवगमिति. ग. B. भगवद्भोगं. 12. हिक्कायां ग. छ. 13. ग. त्रिनेत्रपर्यन्तं. 14. B. त्रियंशं. 15. क. पक्ष्मदण्डं. 16. ख. अङ्गुलविस्तारसं. 17. छ. शिखायां B. शिखायुक्तं.

शिखायामं सार्धमात्रं तदर्धमात्रं तदर्धविस्तारमूरुविस्तारं पात्रकमग्रं द्वियवाधिकं कोलकं जङ्घामूलविस्तारं यवहीना[1]शुशुक्षणिः ग्रीवाविस्तारं कोलकं बाहुविस्तारं यवाधिकाग्नि-रग्रविस्तारं कोलकं प्रकोष्ठविस्तारमर्धाधिकं तत्त्वमग्रविस्तारं द्वियवाधिकमात्रं हस्तपाद-तलौ कर्णौ ताम्रपत्रेण योजयेत् । न [2]कीलबन्धैः । प्रमाणहीनं सर्वप्रजामरणम् । तस्मात् ज्ञात्वैव बुद्ध्योह्य यत्नतः कारयेत् । [3]शूलानि प्रमाणयुक्तान्यादाय प्रोक्षणैः प्रोक्ष्य रात्रिसूक्तेनाभिमृश्य विष्णुगायत्र्या [4]तत्तत्स्थाने संयोज्य स्थापयेदिति विज्ञायते ॥

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे आसनभेदादिनिर्णयो नाम [5]द्विचत्वारिंशोऽध्यायः ॥



## ॥ अथ त्रिचत्वारिंशोऽध्यायः ॥

अथ शूलस्थापनम् । उदगयने आपूर्यमाणपक्षे सुनक्षत्रे सुतिथौ पूर्वोक्तगुण-संपन्नानुक्तदोषविवर्जिताननुज्ञाप्य तैरुक्तविधानेनाचरेत् । तत्र स्थाप-काश्चत्वारः लुप्तश्मश्रुकेशाः सुवस्त्राः अपराह्णे उपवासव्रतं कुर्युः । सोपवासं शिष्य हिरण्यपवमानैः "अणोरणीया" नित्यनुवाकैश्चाभ्युक्ष्य [6]गुरुः शिष्यस्त्वमित्याहरेत् । तेन शिष्यः पापात्प्रमुच्यत इति । [7]स पत्नीसहितः श्रुत्वा[8]कल्प-विधिं भगवन्तं [9]ध्यात्वा श्रद्धाभक्ती पुरोधाय निशायां [10]संविशेत् । प्रभाते स्नात्वा [11]शुचिः शुचिवासःसमन्वितोऽन्तर्जलगतः अघमर्षणं कृत्वा प्राणायामं [12]सहस्रं शतं वाष्टयुतमभ्यसेत् । प्राजापत्ये मुहूर्ते अद्भिः प्रक्षाल्य पञ्चगव्यैः स्नापयित्वा "नमो वरुणः शुद्ध" इति [13]तैलेन शूलमालिप्य "शन्नो देवीः" "सोमो धेनु" मिति मध्वाज्यमिश्रमालिप्य "भूः प्रपद्य" इति देवेशं नमस्कृत्य "परं रंह" इति पीठा-दादाय "प्रतद्विष्णुस्तवत" इति श्वभ्रमध्ये देवेशं संस्थाप्य विष्णोर्दक्षिणतः शूलं "मधु वाता" इति मधुना प्रक्षाल्य "स्वस्ति दा" वीति प्रोक्ष्य "वसोः पवित्र" मिति पञ्चगव्यैः देवेशं संस्नाप्य तत्रावशिष्टगव्यैः "आपो हि" ष्ठेति तत् शूलं प्रोक्ष्य

शूलस्थापन-विधिः

1. आशुशुक्षमविस्तारं. 2. ग. किल. 3. B. शूलानीति न दृश्यते. 4. छ. तत्र स्थाने. 5. ग. इति त्रिषष्ठितमः खण्डः. 6. छ. गुरुः शिष्यस्त्वमित्युदाहरेत् घ. गुरुं शिष्यत्वं. क. गुरुं शिष्यत्वमाचरेत्. 7. गुरुं स्वपत्नी सहितं कृत्वा. क. A. सपत्नी. 8. क. कल्प-विधं. 9. क. स्नात्वा. 10. क. स्वपेत्. 11. शुचिरप्यशुचिः. 12. घ. अष्टसहस्रं चतुःषष्टिसंयुतं च. 13. तिलतैलेन.

पश्चाद्देवेशं [1]क्षीरघृतमधुसिद्धार्थोदकाक्षतोदककुशोदकगन्धोदकैः "शन्नो देवीरग्न आयाह्यग्निमीळे पूतस्तस्येमा ओषधयोऽभित्वा शूर [2]चत्वारि वा" गिति [3]संस्नाप्य "आप्याय"स्वेति पुनस्संस्नाप्य वस्त्रोत्तरीयचित्रकक्ष्याभरणादिभिरलङ्कृत्याभ्यर्च्य शूलमपि सहस्रशीर्षादिना अग्रे एकाक्षरादिना मध्ये विष्णोर्नुकादिनाऽधस्तादभिमृश्य यवसर्षपमिश्रेण चन्दनेनालिप्य देववत् [4]ध्यात्वा स्थापकान् वस्त्रोत्तरीयाभरणादिभिरलङ्कुर्यात् । ततो देवेशं प्रणम्याभ्यर्च्य पायसादीन् निवेद्य दक्षिणां दत्वा मूलागारस्य दक्षिणे यमपावकयोरन्तरे देवेशं संस्थाप्य तस्य दक्षिणे शूलं पुण्याहं वाचयित्वा "[5]स्वस्ति दा" इति प्रतिसरां बध्नीयात् । शूलमपि तथा कृत्वा बैल्वशयने अण्डजादीनास्तीर्य "यद्वैष्णव" मिति प्राक्शिरः [6]शाययीत । श्रीवृक्षफलके शूलं सोत्तरच्छदं शाययेदिति [7]विज्ञायते ॥

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे त्रिचत्वारिंशोऽध्यायः[7] ॥

---

## ॥ अथ चतुश्चत्वारिंशोऽध्यायः ॥

एवं कृत्वा प्राकारबहिरुत्तरे भूमियज्ञं तथा हुत्वा प्राच्यादिमध्यपर्यन्तं पञ्च-
शूलस्थापन-विस्तरः स्वाहवनीयादीन् पूर्ववत् स्थापयेत् । [8]आकारः स्थानान्यथैषां संस्थानं लोकाः । तस्माच्चतुरश्रमाहवनीयं स्वर्गलोकमिति औपासनविधानेन ।
प्रसङ्गादग्नि-स्वरूपकथनम् चन्द्रार्धाकृतिमन्वाहार्यमन्तरिक्षलोकमिति ऊर्ध्ववेद्यां दक्षिणोत्तरं [9]द्वात्रिंशत् [10]प्राक्प्रतीच्यन्तरं षष्टिरेवं द्विवेदिसहितं विस्तारोत्सेधं भागं रसनिम्नमेवं कारयेत् । गार्हपत्यं पूर्णचन्द्राकृतिं भूलोकमिति ऊर्ध्ववेदिः षट्त्रिंशदङ्गुलं समम् । आवसथ्यं त्रिकोणं महर्लोकमिति ऊर्ध्ववेद्येकभुजं षड्यवाधिकमष्टचत्वारिंशदेवं [11]त्रिभुजं द्विवेदिसहितम् । सभ्यं चतुरश्रं जनो लोकमिति । श्रामणाकाग्निकुण्डं ब्रह्मसोमपितृस्थानसमन्वितं विधिना कारयेत् । एतेषामाधारे महाप्रतिष्ठायां यथोक्तस्तथा पृथक् पृथक् भेदेनैव आधारं हुत्वा आहवनीये दौवारिकं गारुडं

---

1. च. क्षीरमधुघृत, 2. चत्वारि वेति (?) 3. संस्नाप्येति खकोशे नास्ति. 4. B. ज्ञात्वा. म. स्मरेत्. 5. च. स्वस्तिदेवेति. 6. क. शाययित्वा 7. ग इति चतुष्षष्टितमः खण्डः. 8. क & B. आधारस्थानान्यथैषां स्थानम् 9. क. त्रिंशत्. 10. क. प्रागपरं. 11. म. प्राङ्निकाय्यं निले त्रिकोणं.

वैघ्नं नागराज ध्वाज रव महाभूत दैवत्यमन्वाहार्ये इन्द्राग्नियमगुह हवीरक्षकदुर्गामन्त्रैः गार्हपत्ये [1]नीलवरुणवायुरोहिणीमातृपुष्परक्षक- होमप्रकारः
दैवत्यमावसथ्ये कुबेरेशानादित्यबलिरक्षकमरस्वतीदैवत्यं सभ्ये वैष्णवं सर्वदैवत्यं जुहुयात् । ब्राह्मं श्रीभूमिदैवत्यं गारुडं वैष्वक्सेनमार्षं पारमात्मिकमीङ्कारादीन् क्रमेणाग्न्यास्ये जुहोति । प्रभाते स्नात्वा मृष्टसिक्तोपलेपनाद्यैः देवतागारं संशोध्य ध्वजपताकापुष्पदाम धूपदीपादिभिरलंकृत्य शयनस्थं देवं संप्रणम्या- शूलस्थापनदेशः
भ्यन्तरं विभज्य किञ्चिन्मानुषमाश्रित्य दैविकस्थाने स्थानकस्यासनं चेद्ब्रह्मसूत्राद्वामे शयने दैवमानुषयोर्मध्ये श्वभ्रं भागावगाढं [2]षोडशाङ्गुलावगाढं वा द्विगुणविस्तृतं चतुरश्रं समुपकल्प्य कारयेत् ॥

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे पञ्चाग्निहोमविधिर्नाम
[3] चतुश्चत्वारिंशोऽध्यायः ॥

---

## ॥ अथ पञ्चचत्वारिंशोऽध्यायः ॥

[4]उदकाक्षतपञ्चगव्यैः प्रोक्ष्य गोमयेनोपलिप्य श्वभ्रमध्ये अधोभागे गजं "तमेकनेमि" मिति "ब्रह्मादेवाना" मिति ब्रह्मस्थाने ब्रह्ममणिं शूलस्थापनार्थ रत्नन्यासः
"इन्द्रं प्रणवन्त" मितीन्द्रस्थाने इन्द्राय हरितालवज्रौ "अग्नावग्नि" रित्यग्निस्थाने मनश्शिलामौक्तिकौ "यमो दाधार नमस्त "इति यमस्थाने अञ्जनवैडूर्यौ "वसवः प्रथम" इति निर्ऋतिस्थाने श्यामशङ्खजौ "ये ते शत" मिति वरुणस्थाने कासीसम्फटिकौ "मरुतः परमा"त्मेति वायुस्थाने पारदपुष्यकान्तौ "सोमं राजान" मिति सोमस्थाने [5]सौराष्ट्रचन्द्रकान्तौ "ईशान-ईश ई" शेति ईशस्थाने गोरोचन- नीलाविति[6] "शन्नो निधत्ता" मिति मध्ये वासुकेरमृताश्मकं "धाता धातृ" णामिति पावकेन्द्रयोरन्तरे साध्येभ्यो [7]लोहिताश्मकं "विश्वे देव" स्येति यमाग्न्योरन्तरे विश्वेभ्यो देवेभ्यश्चोत्पलमणिं "अधि ब्रह्मा यतता" मिति यमनील- योरन्तरे [8]सिद्धेभ्यः प्रवालकं "इमां मूर्धन्या" इति नीलवरुणयोरन्तरे गन्धर्वेभ्यो

---

1. म. इत आरभ्य शयनस्थमित्यन्तं न दृश्यते. 2. म. षोडशेति पदं न दृश्यते. 3. ग. 66 खण्डः. 4. म. साक्षतोदकैः पञ्चगव्यैः. 5. सौराष्ट्रचन्द्रकान्तामिति सर्वत्र पाठः. 6. अत्र इतीत्यधिकं भाति 7. छ. B. लोहिताक्षं. 8. छ. सिद्धानां.

मनश्शिलां "अप्सर:स्विति" वरुणवाय्वन्तरे अप्सरोभ्यः शुक्तिजं "यं काद्रवेया" इति वायुसोमयोरन्तरे नागेभ्यो विमलमणिं "अर्यम्णः कु" म्भीति धनदेशानयोरन्तरे अर्यम्णः प्रवालं "[1]तं त्रीण्ये" षेतीन्द्रेशानयोरन्तरे भूतेभ्यो नीलं तस्मादुपरि "तमेकनेमि"मित्युपरि गरुडरूपं ब्रह्मस्थाने ब्रह्मणे सौवर्णं गैरिकं(?)इन्द्राय षष्टिकव्रीहियवौ अग्नये कुलुत्थमाषौ यमाय मुद्गगोधूमौ निर्ऋतये तिलतिल्वौ वरुणाय यववंशयवौ वायवे नीवारप्रियङ्गू सोमाय गोधूमयवौ ईशानाय सर्वबीजानि तत्तन्मन्त्रेण [2]पूर्ववन्निक्षिपेत् । [3]"तमेकनेमि" मित्युपरि कूर्मरूपं "[4]भूमाननोग्र" इति गदाचक्रासिशक्तिशरान् दक्षिणपार्श्वे वामे "तन्मा यशोऽग्र" इति शङ्खशार्ङ्गखेटकान्यथाक्रमं प्रतिष्ठापयति । श्रीवत्सपूर्णकुम्भभेर्यादर्शमत्स्ययुग्माङ्कुशशङ्खावर्तानीत्यष्टमङ्गलानि इन्द्रादीशानपर्यन्तं यथाक्रमेण [5]"भूयाम वृत्त्या" "नमस्सुलोमि" "स एको भूत्" "देवस्य त्वा" "अतो देवा:" "क्ष्मामेकां" "तन्मा यशोग्रे" "ब्रह्मा देवाना" मिति स्थापयेत् । सर्वरत्नसमन्वितं हाटकाम्बुजमध्ये कोलकोच्छ्रयं [6]जातमयमयं श्रीरूपं कृत्वा "शं सा नियच्छ"त्विति द्वाराभिमुखं प्रतिष्ठाप्य अश्वत्थमूलशैलार्णवसरोवल्मीकवृषशृङ्गगजदन्तजदर्भमूलगवांगोष्ठेषु मृदं संगृह्य ब्रह्मादीनां यथाक्रमेण तत्तत्स्थाने तत्तन्मन्त्रेण विनिक्षिपेदिति । सरस्वती यज्ञभाण्डस्रुक्स्रुवकमण्डलून् सौवर्णेन वृद्ध्यर्थं ब्राह्मणानां[3] क्षत्रियाणां ध्वजशस्त्रायुधानि वैश्यानां [7]तुलातोदौ शूद्राणां हलं सुवर्णेन कृत्वा "हिरण्यरूप" इति स्थापयेदिति । मेघविद्युल्लता[8]रूपौ कृत्वा राष्ट्राभिवृद्ध्यर्थं "ये ते शत" मिति प्रतिष्ठापयेदिति ॥

इति श्रीवैखानसे काश्यप्रोक्ते ज्ञानकाण्डे रत्नन्यासविधिर्नाम
[9] पञ्चचत्वारिंशोध्यायः ॥

---

## ॥ अथ षट्चत्वारिंशोध्यायः ॥

एवं कृत्वा प्रोक्षणैः प्रोक्ष्य श्वभ्रं वाससाऽऽछादयेत् । स्थापकान् वस्त्राभरणादिभिरलङ्कृत्य ओङ्कारजयशब्दैः [10]तताद्यैराघोष्य "प्रतद्विष्णुस्तवत" इति ब्राह्मे मुहूर्ते शूलं संस्थापयेत् । ध्रुवसूक्तं जपति । [11]अविच्छिन्नं

शूलस्थापनविस्तरः

1. तत्त्रीणीति मुद्रितपाठः. 2. छ. पूर्वं. 3. B. तमेकेति. 4. भूमानन्तोग्रे इति मुद्रितपाठः. 5. भूय आत्मवृत्त्या मुद्रितपाठः. 6. जातमयमयमिति B. पाठः. 7. ग. तुलां. 8. रूपे इति स्यात्. 9. ग. इति षट्षष्टितमः खण्डः. 10. छ. तानाद्यैः घ. तानकाद्यैः 11. ग. जप्त्वा.

कनिक्रदादि जपन् सुदृढं सुस्थितं अचलं स्थापयित्वा "नमो वरुण" इति क्षीरेण क्षालयेत् । देव्योरप्युभयोः पार्श्वे तत्सूत्रे द्वियवान्तरे तथैव संस्थाप्य ब्रह्मकुड्यान्तरे किञ्चित्पश्चिममाश्रित्य ऋष्योः शूलं संस्थाप्य हिरण्येनोद्वर्त्य [1]स्पृष्ट्वैव शूलं [2]अतो देवादि सहस्रशीर्षाद्येकाक्षराद्यात्वाहार्षादि विष्णोर्नुकादीन् जप्त्वा सभ्ये सर्वदोषोपशान्त्यर्थं शान्तिं व्याहृतिपर्यन्तमग्न्यास्ये जुहोति[3] ।

कुण्डमध्ये प्रत्यङ्मुखः [4]सर्वदेवावृतः स्वाहास्वधाभ्यां [5]ब्राह्ममासनमासीनः सप्तार्चिः समुज्ज्वलन्नूर्ध्ववक्त्रो वसति । कर्णे हुते व्याधिपीडनं चक्षुष्यन्धत्वं नासिकायां महाव्याधिर्मस्तके सर्वनाशः शेषेष्वपि दारिद्र्यं तस्मात्सर्वप्रयत्नेन आस्यं बुद्ध्वा शरोङ्गारेऽग्नौ जुहोति । अग्निध्यानम्. आस्यहोमचोदना.

तिलाज्यमिश्रं चरुं न्यग्रोधफलमात्रं अङ्गुष्ठानामिकामध्यमाभिः हुत्वा अग्नये वैश्वानराय जातवेदसे पावकाय हुताशनाय हव्यवाहनाय स्वाहाप्रियाय स्वाहा इति हुत्वा सर्षपमिश्रं चरुं यज्ञमूर्तये योगमूर्तये विष्णवे वटपत्रशायिने [6]अनन्तशायिने पुष्करनाभाय [7]विश्वेश्वराय श्रियै पौष्ण्यै मृकण्डुजाय ख्यातीशाय सुपर्णाय शैषिकाय हलाय [8]जलाय स्वाहेति व्याहृत्यन्तं हुत्वा अग्निं विसृज्य देवं प्रणम्याभ्यर्चयति । स्थापकेभ्यः स्वशक्त्या निष्कादहीनं पृथक् पृथक् सुवर्णं दत्वा पश्चात् मृत्सङ्ग्रहणं [9]करोतीति विज्ञायते ॥

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे शान्तिहोम (विधि) रत्नन्यासविधानं नाम [10] षट्चत्वारिंशोध्यायः ॥

## ॥ अथ सप्तचत्वारिंशोऽध्यायः ॥

अथ मृत्सङ्ग्रहणम् । [11]पुण्यनद्यद्रिसरस्तटाकतीरे शुद्धे देशे मनोरमे पूर्ववद्गत्वा संशोध्य अभ्यर्च्य श्रियं च हरिणीं [12]वीशशैषिकौ प्रोक्षणैः प्रोक्ष्य पुण्याहं वाच्य[13] उक्तलक्षणसंपन्नामायुर्वर्णसमन्वितां शुभ- शूललेपनार्थं मृत्सङ्ग्रहणम्.

---

1. छ. अस्पृष्ट्वैव. 2. म. वैष्णवं पुरुषसूक्तं विष्णुसूक्तं च जप्त्वा सभ्ये इत्यादि. 3. ग. इति सप्तषष्टितमः खण्डः: 4. ख. देवयुतः. 5. ब्राह्ममासीनः कादन्यत्र. 6. क. अनन्तशयनाय. 7. घ. विश्वाशयाय. 8. जलायेति घ म कोशयोः नास्ति. 9. म. भवतीति. 10. ग. इति अष्टषष्टितम. खण्डः 11. A. पुण्यनद्यादि. 12. A. न दृश्यते इदं पदम्. 13. क. म. वाचयित्वाः

वृद्धिदां महीं महीसूक्तेनादाय शन्तिं हुत्वा देवीभ्यां ऋषिभ्यां वीशशैषिकाभ्यां नदीभ्यः पर्वतेभ्यो नागेभ्यो हुत्वा अग्निं विसृज्याशीर्भिराघोष्यागारं गत्वाऽभ्यन्तरं प्रविश्योत्तरे पार्श्वे पार्थिवं धूपदीपसमन्वितं स्थापयेत् ।

मृत्संस्कारः

गन्धवर्णयुतं साद्यस्कं कापिलं घृतं [1]कांस्ये लिद्र्येकप्रस्थं [2]कुडुबं प्रस्थार्धं वा [3]तदर्धमादाय संशोध्य दधिपयोऽतसीस्नेहानेकैकं घृतात्पादाधिकं गृहीत्वा [4]उत्पूय [5]यवसर्षपगोधूमातसीतिल्वदीसीनां चूर्णं पृथक् पृथक् हृतमादायैकस्मिन् भाण्डे क्षिप्त्वा पिधाय मासमात्रं तदर्धं दशरात्रं वा निधापयेत् । नारशब्दाखुकर्णीत्रिप(?)चलचाकृष्णामरदारुहरितालहारिद्रमरीचविडंगब्राह्मीन् संशोध्याऽऽशोष्य त्रिपलं द्विपलं पलं वा चूर्णीकृत्य द्रोणे द्रोणार्धे आढके वा जले क्षिप्त्वा अर्धमासं तदर्धं वा निधापयेत् । न्यग्रोधाश्वत्थोदुम्बरप्लक्षखदिरवञ्जुलासनादीनां निर्मोकं पृथक् पृथक् कुट्टयित्वा भागमाहृत्य तुलस्यपामार्गनन्द्यावर्तकरवीरभूपलबिल्वादित्यसाह्वयसहदेवीलक्ष्मीशमीपत्रसारे अश्वद्धाद्यजिनानि आक्षिप्यार्धमासं निधापयेत् । अश्वत्थोदुम्बरप्लक्षाणां क्षीरमेकैकं घृतार्धमाहृत्यैकस्मिन् भाजने क्षिप्त्वा श्रीवेष्टसर्जरसकुन्दुरुगुग्गुलुकपित्थनिर्यासान् समभागं चूर्णं कृत्वा तस्मिन् दशरात्रं निधापयेदिति विज्ञायते ॥

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे मृदादिसंस्कृतिविधिर्नाम [6]सप्तचत्वारिंशोऽध्यायः ॥



## ॥ अथाष्टचत्वारिंशोऽध्यायः ॥

मृत्संस्कारविस्तरः

एवं कृत्वाभिनवेषु कटेषु फलकेषु वा प्रोक्ष्य "उदुत्यं चित्र" मिति मृदमवकीर्य विश्वामित्रान् परिहृत्यातपेनाशोष्य गायत्र्या प्रोक्ष्य "मेदिनी देवी"ति पात्रेष्वापूर्य एवं क्रमेणाऽऽशोष्य देवागारोत्तरे उलूखलमुसलौ प्रक्षाल्य संस्थाप्य [7]ब्रह्मेश्वरावभ्यर्च्य "श्रिये जात" इत्यापूर्य अतो देवादिभिश्चूर्णयित्वा अभिनवेषु भाण्डेषु [8]धूपितेषु वकुलचम्पक[9]मल्लिकादिभिर्वासितेषु

1. च. कांस्यं. 2. छ त्रिकुडुबं. 3. छ. तदर्हं. 4. B. भुर्वच्छित्वा (?) उत्पूय. 5. M. यवेति न दृश्यते. 6. ग. इत्येकोनसप्ततितमः खण्डः. 7. क. ब्रह्मपावकौ 8. A. सुपूजितेषु. 9. A. मल्लीभिः

अहोरात्रमापूर्य नादेयं जलमादायोत्पूय "इदमापश्शिवा"[1]इत्यपोभिमन्त्र्य "इदं विष्णु"रिति पुनः पुनर्मर्दयित्वा आदाय "येते शत"मिति ब्राह्मे मुहूर्ते क्षिप्त्वा सहस्रशीर्षादिनाऽभिमृश्य एकाक्षरादिना वस्त्रेण संशोध्य अहोरात्रं निधाय [2]जलमास्राव्य पूर्वोक्तस्नेहकषायचूर्णौषधैः "ब्रह्मा देवा"नामिति संसृज्य "पूषा त"इति मर्दयित्वा चन्दनागुरुकोष्ठूशीरैलालवङ्गजातीफलाञ्जनादीनि(?)[3]पेषयित्वा "यन्मे गर्भ"इति क्षिप्त्वा [4]सुवर्णरजितताम्रचूर्णैः [5]संमर्द्य कपित्थनालिकेरत्वक्चूर्ण "मिन्द्रं प्रणवंत" मिति प्रक्षिप्य "वायु प" रीति पुनः पुनः मर्दयित्वा प्रोक्षणैः प्रोक्ष्य [6]वितानाच्छादिते धूपदीपसमन्वितं त्रिरात्रमेकरात्रं वा क्षिपेत्[7]। [8]सकृत्कृत्वैवमभिनवेषु दधिदुग्धनालिकेरसलिलानि कांस्ये तदर्धं प्रस्थं वाऽऽहृत्य संस्राव्य वकुलबदरफलसारान् पृथक् पृथक् दुग्धार्धं संस्राव्य महिषाक्षयज्ञ[9]यूपसायसशल्ककापित्थकुष्ठगैरिकान् पृथक् पृथक् तदर्धं पादं वा चूर्णीकृत्य क्षिप्त्वा[10]करुंजाश्वत्थादिनिर्यासान् पादाधिकदुग्धेन पेषयित्वा प्रक्षिप्य त्रिफलाविश्वभेष [11]जघनचपलान् एकैकं निर्यासार्धं [12]क्षिप्त्वा नदीरोहादिक्षीरदुग्धं यथालाभं प्रक्षिप्य वस्त्रेणावेष्ट्य षड्रात्रं त्रिरात्रं वा निधापयेत् ।

शर्करालेपनम्

एतेन अतोदेवादिना शूलमालिप्य प्राच्यामौपासनाग्नौ शान्तिं हुत्वा विष्णवे श्रियै हरिण्यै चिरायुषे ख्यातीशाय गरुडाय शान्ताय चक्राय शङ्खाय भूतेभ्यः सर्वाभ्यो देवताभ्य स्वाहेति हुत्वा व्याहृत्यन्तं जुहुयात् । एतत्पार्षदमिति ।

अग्निं विसृज्य नालिकेरनिर्मिकनिर्मितान् त्रिवृतानृजून् [13]रज्जून् "[14]स्वस्ति दा" इति सिरावद्रज्जुबन्धनं करोति । ततः शिल्पिना तदर्हं योजयेत् ।

रज्जुवेष्टनम्

मध्याह्नेऽब्जाग्नौ अब्जहोमं कृत्वा "मेदिनी दे"वीति मृदमभिमृश्य पारमात्मिकमविच्छिन्नं जप्त्वा [15]संयोजयेत् ॥

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे सर्वकल्कविधिर्नाम
[16]अष्टचत्वारिंशोऽध्यायः ॥

---

1. A. इत्यभिमृश्य. 2. घ. जलमास्य, 3. B. संमर्द्य पिष्टं. घ सम्मर्द्यापिद्धं. 4. ट. अगतादि. 5. प्रतद्विष्णुस्तवत इत्यधिकं तत्र ट कोशे. 6. क. सच्छादने छ. नच्छादने ग. छत्रादिने. 7. ग. इति सप्ततितमःखण्डः. 8. B सर्वत्रैवं कृत्वैवं. 9. ट. धूपसायशल्कठापिद्धकुंकुष्ठ. 10. रुंजाशनादि. 11. B. घन. 12. क. क्षिपेत्. 13. रज्जूनिति ग.म. कोशयो. न दृश्यते. 14. A. B. स्वस्तिदवेति. 15. B. M. संयोज्य. 16. ग. त्येकसप्ततितमः खण्डः.

## ॥ अथैकोनपञ्चाशोऽध्यायः ॥

बिम्बे रत्नन्यासः

हृदये पद्मरागं ललाटे जातिरत्नं ग्रीवायां मौक्तिकं बाह्वोर्वैडूर्यं नाभौ ब्रह्ममणिं मेढ्रे सौवर्णं पादयोः पुष्यकान्तचन्द्रकान्तौ एकाक्षरादिसूक्तं [1]विष्णुसूक्तं पुरुषसूक्तं दुर्गासूक्तं पारमात्मिकं[2] ध्रुवसूक्तं गोदानसूक्तं क्रमेण जपन् तत्तत्स्थाने रत्नानि निक्षिपेत् । दक्षिणेऽक्षिण "सूर्यो" सीति सूर्यकान्तं वामे "चन्द्रो" सीति चन्द्रकान्तं श्रोत्रे "मरुतः परमा" त्मेति वज्रं दक्षिणे वामे "सोमं राजान" मिति शंखं, नासिकापुटयोः "रुद्रमन्यं त्र्यम्बक" मित्यमृताश्मकनीलौ आस्ये "पावका न" इति प्रवालं प्रतिष्ठाप्य पश्चाच्छिल्पिना किरीटमूर्धललाटकण्ठभ्रूनयनघ्राणोत्तरोष्ठाधरोष्ठकपोलच्चर्चग्रीवाबाहुजत्रुवक्षोहृदयपार्श्वकक्षप्रकोष्ठकूर्परपाण्यङ्गुलिस्तनोदरनाभिकटिपृष्ठयोनिमुष्कोरुजानुजङ्घागुल्फप्रपदपार्ष्ण्यङ्गुल्याद्यङ्गप्रत्यङ्गानि लक्षणयुतं कारयेत् ।

षण्मासं तदर्धं वा मासं वाऽतीत्य पूर्वोक्तगन्धपिचिक (?) पिद्धशर्कराःपेष्य दक्षिणाग्नौ पार्षदं [3]वैष्णवं हुत्वा [4]शर्करामग्निरिन्द्रादिनाभिमृश्य " दुहतां दिव " मित्यादाय सुरभिमृचमनुद्रुत्य " वाङ् म आसन्, नसोः प्राण " इति तद्वेरे संयोज्य शिल्पिना कारयेत् ।

पटाच्छादनम्

द्विमासमर्धं [5]पक्षं वातीत्य सूक्ष्मावदातं [6]सुसूक्ष्मश्लक्ष्णं सुसूक्ष्मकोमलमम्बरमादाय गार्हपत्ये सहस्राहुतीर्हुत्वा गायत्र्याऽम्बरं प्रोक्ष्य " सोमस्य तनू " रसीति संयोज्य तद्बाह्ये [7]मौक्तिक [8]मृदालिप्य किरीटोष्णीषमकरकुण्डलहारकेयूरकटकोदरबन्धनोपवीतकटिसूत्रप्रलम्बमेखलाङ्गुलीयक [9]पादाभरणान्यम्बराणि च कारयेत् [10] । दशरात्रं पञ्चरात्रं [11]त्र्यहं वातीत्याऽवसथ्ये महाशान्तिं[12] पार्षदं च जुहुयात् ।

---

1. विष्णुसूक्तं पारमात्मिकमीङ्कारादीन् ध्रुवसूक्तं. 2. ईकारादीनिति म. छ. कोशयोरधिकं. 3. ग. घ. वैष्णवान्तं. 4. B. शर्करं. 5. पक्षमिति टकोशे न दृश्यते. मासमर्धं वेत्येव. 6. सुसूक्ष्मश्लक्ष्णमिति म ट कोशयोः न दृश्यते. 7. मौक्तिकमिति B कोशे नास्ति. 8. क. ख. ट. मृदमालिप्य. 9 A. आभरणानि. 10. ग. इति द्विसप्ततितमः खण्डः. 11. पक्षं दुत्र्यहं वातीत्य B. म. पक्षं सर्ववर्णमाहृत्य. 12. क. B. महाशान्तिं च हुत्वा.

श्वेतसौवर्णश्यामाञ्जनवर्णा[1]श्चतुर्युगेषु हरे रूपं तस्माद्युगे युगे [2]तत्तदर्हं ज्ञात्वा कापित्थादि वर्णयेत्। शुद्ध [3]संकरजान् वर्णान् ज्ञात्वा "हिरण्यगर्भ" इत्यभिमृश्य [4]गायत्र्यादायात्मसूक्तं जप्त्वा अतो देवादिना तूलिकाग्रेण वर्णमादाय विष्णोर्नुकादीन् जप्त्वा ललाटे "चित्रं देवाना"मित्याभरणे "तेजो वत्सव" इत्यंबरे "भूमाननोग्र" इति चक्रे "असादुपा"स्येति पाञ्चजन्ये "गन्धद्वारा"मिति श्रियं "मेदिनी दे"वीति महीं "चिरायुष"मिति मार्कण्डेयं "यतस्स्वमासी"दिति ख्यातीशं तदर्हं वर्णं योजयेत्। [5]ततः शिल्पी भगवन्तं ध्यात्वा मूर्धादि पादपर्यन्तं क्रमेण भक्त्या युक्त्या [6]तत्तच्छरीरे क्रमेण यावत् द्रव्यं मनोहरं [7]बुध्याह्लादकरं शान्तिकाद्युज्ज्वलितं कारयेत्। तत्तहाटकसंकाशां श्रियं महीं श्यामलांगीं भृगुं प्रवालाभं पुराणं सुवर्णाभं चक्रं रविमण्डलाभं शङ्खं चन्द्राभं कनकाभं किष्किन्धं श्यामलाङ्गं सुन्दरं रक्तं भानुं शुक्लं [8]चन्द्रं सुवर्णवर्णं [9]ब्रह्माणं रुद्रं प्रवालाभं योजयेत्। मणिकं जटाधरं द्विभुजं हृदयेञ्जलिसंयुतं [10]शुकपिञ्छांबरधरं पिङ्गलाक्षं उपवीतोत्तरीयाजिनधरं सन्ध्यां [11]तत्पत्नीं सर्वालङ्कार-संयुक्तां सुवर्णाभां सुमुखीं मनोज्ञां हृदयेञ्जलिपुटां शुक्लवस्त्रां तापसं जटिलं दण्डहस्तं शुक्लाम्बरधरं भिन्नाञ्जनाभं [12]शातातपं दूर्वाभं दण्डिनं कपर्दिनं रक्ताम्बरधरं वीरवेषयुतं गरुडं काञ्चनाभं आपादादाजान्वानाभेराकण्ठादामूर्ध्नं पृथिव्यप्तेजोवायुमयं जातं [13]शंखनीलाञ्जननिभं गारुडं रूपमित्यृषयो वदन्ति। तद्वद्वापि [14]बृहत्पक्षाटोपं [15]भुजस्थ-भुजगेन्द्रं वीररौद्रसमन्वितं दंष्ट्राकरालं श्यामोत्तुङ्गमहातुण्डं [16]ललाटात्ताम्रचूडं हृदये-ऽञ्जलिपुटं कटिविन्यस्तहस्तं [17]पताकादक्षिणपाणिं वा श्यामांबरधरं वा पन्नगवि-भूषितम्[18]। शैषिकं रक्तवर्णं श्यामाम्बरधरं किरीटकेयूरहारप्रलम्बयज्ञोपवीतिनं [19]द्विभुजमेव कारयेत्। अन्येषामपि सर्वेषां रूपवर्णपर्यंतप्रभृतीनि तत्र तत्रोक्तविधिना

वर्णसंस्कारः

---

1. ट. Bचतुर्युगेषु हरेरूपं. 2. B. अर्हमर्हं. 3. ट. संस्कारभाक्. 4. B. गायत्र्या वा. 5. छ. तच्छिलिपभि. 6. घ. तत्तछविक्रमेण. 7. B. बुध्याह्लादकरं शान्तिकाद्युज्ज्वलं. 8. क. बुद्ध्याहाटकरत्नकान्त्युज्वलितं. 9. छ. ब्राह्मं. 10. रक्तवर्णं च इति ट कोशे अधिकं. 11. B. घ ट. तन्दर्ज्ञीं. 12. A. वैखानसं. 1 . B. कालाञ्जननिभं. 14. छ. पक्षारोपं. 15. A. भुजस्थलभुजगेन्द्रं. 16. ट. ललाटान्तात्तचूडं. 17. क पतद्दक्षिणहस्तं ? 18. ग. इति त्रिसप्ततितम खण्डः सुवर्णाभमिति तत्र छ कोशे. ट. रक्तवर्णाभं. 19. जयेश-मिति ककोशे ?

बुद्ध्या युक्त्या ऊहित्वा कारयेत्। शूलग्रहणवत् दार्वश्मनोः ग्रहणं तस्मादुक्तविधिनाहृत्य स्थापयेदिति विज्ञायते ।

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे शर्करावर्णसंस्कारो [1] नामैकोनपञ्चाशोऽध्यायः ॥



## ॥ अथ पञ्चाशोऽध्यायः ॥

भगवतो रूपकल्पनत्

अथातो भगवतो नारायणस्याकृतिलक्षणं व्याख्यास्यामः। यस्यास्यमग्निर्द्यौर्मूर्धा खं नाभिः पादं चक्षुषी अर्कनिशाकरौ दिक् श्रोत्रे ज्योतींष्याभरणान्युदधयोम्बरं भूतानीन्द्रियाण्यस्याकृतेः प्रमाणत्वं कल्पितं भृग्वादिभिः। तद्धेतुभिर्नावमन्तव्यममीमांस्यमाज्ञासिद्धमिति ज्ञात्वा तदुक्तविधिना कारयेत् ।

शास्त्रसिद्धबिम्बस्यफलदत्वम्

विधिनाकारितं बेरं सर्वपापहरं पुण्यं भुक्तिमुक्तिफलप्रदं स्वबुद्धि[2]क्लृप्तमशुभं पुण्यकीर्तिविनाशनम् । तस्माच्छास्त्रं समालम्ब्य बुद्ध्या युक्त्या प्रमाणयुतमेवं मनोहरं कारयेत्[3] ।

त्रिविध चित्रम्

चित्रं चित्रार्धं चित्राभासमिति चित्रं[4] त्रिविधम् । सर्वावयवसंपूर्णं मानोन्मान [5]प्रमाणलक्षणयुक्तं चित्रम् । तदर्धदर्शनं चित्रार्धम् । [6]पटकुड्यादिलेख्यो लेख्यमाभासम् ।

मानविचारः

ऊर्ध्वमानं भवेन्मानं प्रत्यङ्गेषु च यन्मानं तदुन्मानं अङ्गानां यत्परिणाहं तत्परिमाणमिति। विष्णुब्रह्मरुद्राणां दशतालं रविस्कन्देन्द्राणां नवार्धतालं [7]देव्योर्देवर्षीणां वेदाङ्गुलाधिकं नवतालं लोकपालामितसुपर्णानां नवतालं नरजघन्यकुब्जवामनभूतकिन्नरकूश्मांडकबन्धानां क्रमेणाष्टसप्तषट्पञ्चचतुस्त्रिद्व्येकतालानि भवन्ति । [8]उत्तमाधममध्येन दशतालं त्रिविधं भवति। वेदत्रिष्टुवधिकाधृतिरुत्तमं मध्यमं द्वात्रिंशदधिकमधमं त्रिष्टुबधिकम् । अधिकेन देवेशं मध्यमेन हरमधमेन विरिंचिमाचरेत् ।

1. ग. इति चतुस्सप्ततितमः खण्डः. 2. A. कल्पितं. 3. ग. इति पञ्च सप्ततितमः खण्डः. 4. चित्रमिति ग पुस्तके नास्ति. 5. ग. प्रमाणयुतं लक्षणयुतं. 6. A. पटकुड्यादिष्वालेख्यं यच्चित्राभासम् छ. उल्लेख्यमानमूर्ध्वमानं. 7. छ. देव्योरेवमृषीणां. 8. क. उत्तम मध्यमाधम.

अणुस्यन्दनरेणु[1] पिचुककेशाग्रतनुकतिलयवानां क्रमेण वसुगुणितं मानाङ्गुलम्। मध्यमपुरुषस्य दक्षिणहस्तमध्यमाङ्गुलिमध्यपर्वायतं मात्राङ्गुलम्। यस्य यत्तालमानं तत्संख्यया हृतं देहलब्धाङ्गुलम्। तद्विभज्य मानाङ्गुलेन क्षेत्रवस्तुनिकेतनप्रमाणानि। गृहशाय्यासनयानास्त्रायुधेध्मस्तुवस्तुवादीनां मात्राङ्गुलम्। बेराणां देहलब्धाङ्गुलमेवं ज्ञात्वारभेत्[2]। [3]अथोष्णीषं त्रियवाधिकं तद्वच्छिरोभागं पावकं तदधस्तादक्षिसूत्रं पुटान्तं हन्वन्तमेकैकं त्रियवाधिकं भागं गलमर्धाङ्गुलं कण्ठं चतुर्यवाधिकं रुद्राक्षं कण्ठाद्वक्षसः वक्षस आनाभेर्नाभेरासीवनकान्तमेकैकं [4]मात्रार्धन्यूनं क्रिष्ट(?) कुहूः प्राणायामयुतं त्रिष्टुप् ऊरुमानं प्रतिष्ठा जानुजङ्घे चोरुसमे चरणौ जानुसमावेवं त्रिष्टुबधिका [5]धृतिरिति [6]तलायामं पर्वताधिकपङ्क्तिर्हिक्कासूत्राद्बाहुचाङ्गनायुतं [7]सद्व(?)किष्कुप्रकोष्ठमेकोनविंशद्धस्ततलं चतुर्यवाधिकं [8]सयममिति बृहतीमङ्गुलीपृष्ठेनाहत्यैतच्छीर्षोन्मानं कर्णयोरन्तरे यमं वेदाङ्गुलं पादयवाधिकपादयुगेनाग्निनाहत्यैतत्कर्णपर्यन्तं तारकं यवाधिकरुद्राक्षेण वर्धितं पृष्ठे

मानोपयोगि-अङ्गुलादि-लक्षणम्

---

1. ट. चवुक. 2. ग. इति षट्सप्ततितमः खण्डः. 3. अत्र ट कोशे कश्चनग्रन्थभाग अधिकः परिदृश्यते. "अथातेऽङ्गुलिसंज्ञां व्याख्यास्यामः मानमात्र देहलब्धाङ्गुलाश्चेति त्रिविधाभवन्ति तत्र परमाणु पिचुककेशाग्रकनकतिलस्वाङ्गुल्यन्तंक्रमादेकैकोऽष्टगुणितलब्धं तन्मानाङ्गुलामति। मध्यम पुरुषस्य दक्षिणहस्त मध्यमाङ्गुलेः मध्यमपर्वणा लब्धं मात्राङ्गुलमिति। यस्य देहेषु यदुक्त तद्विभज्यैकैकं देहलब्धाङ्गुलामिर्ति विज्ञायते। पादान्मूर्धान्तं स्वहस्तेनाष्टतालोच्छ्रयं मध्यमपुरुषमित्याचार्या वदन्ति। मात्रा तत्वं मूर्तिर्विष्णुश्चेत्येकाङ्गुलस्य संज्ञा कीलकाऽश्विनेत्र कालब्राह्मणाश्चेति द्व्यङ्गुलस्य मध्यमाग्निरुद्राक्षसहजाश्चेति त्र्यंगुलस्य भागवेदकरतारकबन्धुप्रतिष्ठाश्चेति चतुरङ्गुलस्य तीर्थेन्द्रियभूतखर(?) शर सुतसुप्रतिष्ठाश्चेति पञ्चाङ्गुलस्य षडास्यांङ्ग कर्मसमयरस गायत्रीति षडङ्गुलकस्य मुनिलोकपर्वतसागरप्राणायामं त्रि (?) मातृरोहिण्युष्णिक्चेत्यष्टाङ्गुलस्य ब्रह्मग्रहधर्मद्वारसूत्रबृहतीचेति नवाङ्गुलस्य अयोज्यश्च वैखानसः पङ्क्तिः कृतसत्त्वः श्रामणकश्चेति दशाङ्गुलस्य त्रिष्टुभ् वागे मे(?)रुद्राश्चेत्येकादशाङ्गुलस्य अति (?) त्रिष्टुप् किष्कुश्चेति विंशतेः जगती धनुर्मुष्टिश्चेति त्रिंशतेः अतिजगती प्राजापत्यं चेति चत्वारिंशतेः शक्करीति षष्टेः अष्टिरिति सप्तते: अत्यष्टिरित्यशीतेः धृतिरिति नवतेरतिधृतिरिति शताङ्गुलस्येत्येताः संज्ञा भवन्ति। ऋकारं च लृकारं च व्यपोह्याकारादौकारान्तं दशादिशतसंख्या संज्ञा भवन्ति। कटपयादीन् वर्गाद्वर्गं प्रति यथा क्रमेण कादि संख्या भवन्ति। मुखं तालं यमं मुनिः प्रादेशमादित्याः कृच्छ्रं वितास्तिश्चेति द्वादशाङ्गुलस्य रत्निस्संवृतमुष्टिस्स्यादरत्निः प्रसृताङ्गुलिरिति विज्ञायते. इति 4. छ. मात्रार्धान्न्यूनं. 5. छ. मूर्तिः M. मतिधृतिः. 6. छ. तालायामं. 7. सद्वकिष्कुमात्रे इति ट कोशमात्रे M. धद्व. 8. च. समयमिति, M. समता वेति

कर्णयोरन्तरे[1] ग्रीवाग्रविस्तारं चतुर्यवाधिकवसुमन्त्रिग्रीवाघनविस्तारं अर्धाधिकं[2] ग्रहं ग्रीवामध्यमं बृहतीमग्निना(?) गुणितं यवाधिकं [3]पङ्क्तिःपृष्ठेन वर्धितं बाह्वोः कक्षयोरन्तरं चतुर्यवाधिक [4]मश्विनीयुतं त्रिष्टुप् कक्षं तिर्यगर्धाधिकं द्वारं तद्बाहुशिरसोच्छ्रयमुपबाह्वङ्गुलमुभयोरन्तरं च मुखं जगतीमत्युक्तेनाहत्यार्धाङ्गुलमपोह्य तच्छंखचक्रधृतहस्ताङ्गुल्यैः[5](?) पार्श्वकोर्परयोरन्तरं तीर्थं रसं वा प्राणायामार्धाधिकं रसं वेत्यङ्गिराः[6]। स्तनयोरन्तरं चतुर्यवाधिकं यमं बाहुमूलं पावकं वेदयवाधिकं द्वारेणाहत्य भुजमध्योन्मानं मध्यं पादाधिकं वसुभिर्हतं कोर्परं यवाधिकं पर्वत्रयं [7]कोष्ठमध्यमं पावकाधिकं कुहूर्मणिबन्धं त्रिमात्राधिकत्रियममङ्गुष्ठमध्यनाहं वेदं मध्यमं यवाधिकमध्यर्धकोलकं तद्यवहीनं प्रदेशिन्या[8]स्तत्सममनामिका कनिष्ठं यवाधिकं नेत्रं [9]कुक्षियवाधिकमृत्विजं सहजेन वर्धयेत्। श्रोणीवेदाधिक[10]शक्करीकां महती शक्करी(?) कुहूरर्धाधिकात्युक्तेन वर्धितमूरुमूलं कृच्छ्रत्रयं द्व्यङ्गुलादधस्ताच्चतुर्यवाधिकं प्राजापत्यं मध्योरुगुह (?) कोलकत्रयं [11]जानुरभ्योजं पावकहतं यवचतुर्दशमपोह्यैतदुन्मानं जङ्घामूलं [12]त्रियवाधिकं वेदाधिकं त्रिष्टुप् जङ्घामध्यमश्विनीयुतं षूकिं नलिकं(?) प्रदेशोन्मानं कुहूः पादमध्यविस्तारं चतुर्यवाधिका सुप्रतिष्ठा पादाग्रविस्तारमर्धाधिकं रसं त्रयोदशार्धं नवार्धाष्टार्धाष्टसप्तयवमङ्गुष्ठादिकनिष्ठान्तरूर्वीमूलमध्यमजानुजङ्घान्तपार्ष्णिप्रपादाङ्गुष्ठान्तरमर्करं त्रिष्टुप्चतुर्विंशतद्वात्रिंशच्चतुश्चत्वारिंशच्चतुष्षष्टियवानां क्रमेण गुल्फांबरान्तरं बर[13]सनाभेरधस्ताद्वस्त्रपर्यन्तं तथैव भवति।

उष्णीषाल्ललाटान्तं षडष्टयवाधिकं तीर्थमुष्णीषा[14]च्छिरोन्नतावर्तमर्ध्यं यवाधिकं मध्यमयाहत्यैकन्यूनं पुरोगपार्श्वं[15]कक्षौ पावकं कर्णान्तं तद्यवाधिकं पङ्क्त्युष्णीपात्[16]पृष्ठकेशान्तं सप्तयवाधिकानलयुत [17]मयोज्यं प्रापुरोगं प्राणायामं [18]शङ्खचक्रायामं यवाधिकं वेदमपाङ्गादूर्ध्वं केशान्तं वह्नेः [19]केशान्ताद्भ्रुवोर्यवार्धार्धं कोलकं तस्माद्भ्रूसंगं षट्तिला-

---

1. B. अन्तरं. 2. M. ग्रामं. 3. छ. पङ्क्तिपृष्ठे न वृद्धिर्दं. 4. ग & B. अश्विनयुतं. 5. छ. अङ्गुल्योः. 6. ग. इति सप्तसप्ततितमः खण्डः. 7. कोर्परमध्यममिति तत्र ग कोशे. 8. च. तत्सममानादिका. 9. छ. कुक्षित्रियवाधिकमृत्युजं. 10 A B. शक्वरिकां महती शक्वरीति नदृश्यते. 11 ट. जानुरभोज्यं पावकहतं. 12. अत्र वेदाधिकमित्यारभ्य जानुजङ्घान्त इत्यन्तं ट कोशे अधिकः पाठः. इतरकोशपाठस्तु त्रियवाधिकाद्यधिकत्रिषट्जंघामध्यमजानुजङ्घान्त इत्यादिः. 13. छ. सनाभेः. 14. ग. शिरोन्तं. 15. क. B. ऋ (रु) क्षोपावक (क)र्णान्तं. 16. छ. प्रकीष्ठ. 17. छ. भोज्यं, 18. छ. शंखायामं. 19, ग, दक्केशान्तं.

धिकं तत्त्वं तस्मादक्षिसङ्गं भ्रुवोरन्तरे तत्समे भ्रुवोरायामं तीर्थं भ्रूमध्यविस्तारं यवं तदर्धमग्रयोः भ्रूपुच्छात्केशान्तं यवाधिकमत्युक्तत्र्यङ्गुलं ललाटमर्धाधिकमर्ध्यं भ्रूसूत्रनेत्रयोर्मध्य[1]मध्यर्धयवं कोलकं तत्समं नेत्रयोरन्तरं वह्निसमं विस्तारं त्रियवाधिकं तत्त्वं यवप्रमाणं करवीरं तदर्धं रक्तं चतुर्थवाधिकं पक्ष्म वर्म सार्धयवद्वयं शुक्लं त्रियवाधिकं तत्त्वं तदर्धं कृष्णज्योतिः यवं दृष्टिर्यूकप्रमाणं नवतिः पक्ष्मरोमाणि[2] एतेषामायामं त्रियवमश्रुपातं तत्त्वं तस्मात्कर्णपाल्यन्तमर्धाधिकं वेदं कर्णपिप्पलिकादूर्ध्वं [3]नेत्ररेखाघ्राणमूलसमत्वे नेत्ररेखाष्टार्धसप्तदशार्धयवाः घ्राणमध्यमूलाग्रविस्तारं [4]गोजीमूलं नासाग्रोत्सेधं यवाधिकं कोलकं पुटायामं यवाधिकं तद्वत्तद्वारायामविस्तारं चतुस्सप्तयवं यवप्रमाणं बहुलं पुरोत्सेधत्वं पुरस्ताद्वंशाग्रविस्तारं षड्यवं पुष्करान्ताग्रविस्तारं [5]द्व्येकाध्यर्धयवं पुटं नासाग्रं लम्बबिलमध्यर्धयवं [6]गोज्यासूत्रोत्तराधरोष्ठं यवाधिकं तत्त्वं तदर्धं गोज्यायामविस्तारं द्वियवमुत्तरोष्ठस्य विस्तारं षड्यूकाधिकं त्रियवमास्यं [7]वेदविस्तारं यवप्रमाणात्पाली तत्तिर्यग्वृत्तमर्धाधिकं कोलकं तस्माद्धन्वाकृत्यायामं द्वियवाधिकं पावकमधराच्चिबुकायाममर्धाधिकं तत्त्वं तद्विस्तारं त्रियवं सृक्किण्योस्तु कपोलान्तमर्ध्यं ग्रीवाहन्वन्तं [8]यवाधिकानलं [9]कण्ठाच्चिबुकनिर्गमं [10]सार्धसहजमक्षिसूत्रसमत्वे [11]कर्णस्रोतोभ्रुवोरुत्सेधमसम्येकर्णावर्तिकर्णविस्तारं यवाध्यर्धाधिकं कोलकायामं तद्द्विगुणं नाहं तत्त्वं कोलकं कर्णनिर्गमनिम्नायामविस्तारमर्धाङ्गुलं पूर्वापरनालावर्धमात्रमङ्गुलं लम्बं त्रियवाधिकं भागं तदन्तरं [12]यवहीनं तत्त्वमेवं लक्षणेन युक्त्या कारयेत् ।

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे देवेशालयविमानविधिर्नाम
[13] पञ्चाशोऽध्यायः ॥

---

## ॥ अथैकपञ्चाशोऽध्यायः ॥

कर्णाद्धिकान्तरायामं वेदं हिक्काया द्विमुखे जत्रुणी स्याताम्। बिम्बमानविभागः
हिक्कासूत्रात् स्तनाक्षं [14] कण्ठाद्वक्षसोऽन्तसमं स्तनाक्षिमण्डलं

---

1. ग. अध्यर्धं. ग. 2. छ. पक्ष्मरोमाण्येकस्य. 3. नेत्र इति ट मात्रे दृश्यते. 4. गोजीत्यादिषड्यवमित्यन्तग्रन्थः ट कोशे न दृश्यते. 5. A. द्व्येकान्ताध्यर्धयवं. 6. ट. गोज्या सूत्रोत्तरोष्ठं यवाधिकं तत्वं. 7. A. वेदविस्तारं यवं यवप्रमाणं तत्पाली. 8. ट. यवाधिकतालं. 9. ट. कर्णात्. 10. ट. सहजाक्षिसूक्ष्मसमत्वे. 11. छ. कर्णयोः स्यातभ्रुवोरुत्सेधसाम्ये. 12. च. यवहीनं तद्वदेवं. 13. ग. इति अष्टसप्ततितमः खण्डः. 14. छ. कर्णात्.

द्वियवाधिकं कोलकं [1]स्तनाक्षि द्वियवं तदर्धमूर्ध्वमुच्छ्रयं स्तनान्तरमुखायामं नाभिनिम्नं वेदयवं श्रोणीमानं यवाधिकं तीर्थं नितम्बानुसमं मेढ्रायामं यवाधिकं तीर्थं विस्तारं नयनं सीवन्या स्रोतस्तत्त्वमत्युक्तं कोर्परायामं मणिबन्धं चतुर्यवाधिकं [2]समयं तत्समा-मध्यमा अङ्गुष्ठकनिष्ठे त्रियवाधिकभागे अनामिकायवाधिकं समयं [3]तत्समा प्रदेशिनी पर्वाणि त्रीण्यङ्गुलानां द्विपर्वमङ्गुष्टं पर्वार्धं नखायाममङ्गुष्ठनखविस्तारं षड्यवं मध्यमायामं चतुर्यवं शेषाणां यवहीनमङ्गुष्ठमणिबन्धाभ्यामन्तरं दहनं पार्ष्णिभागे [4]वामाङ्गुष्ठं वेदं प्रदेशिनी तद्वद्यवाधिका [5]त्रिमात्रार्धाधिकं मध्यमायामं अनामिकाया द्वियवाधिकं कोलकं कनिष्ठिकाया नेत्रं पर्वार्धनखं कृकाटिकायामं सयवं नेत्रं कृकाटिकाया ग्रीवायामं कोलकं तस्मात्ककुद्यवाधिकं भागं ककुत्कटिसन्ध्योरन्तरं कुहूरत्युक्तेनाभक्तं सहजहीनाद्वाचां सफलके चतुर्यवं तीर्थमाने स्फिक्पिण्डावूरुमूलाद्वेदाङ्गुलोन्नतौ स्याताम्। कटिसन्धिविस्तारं चतुर्यवाधिकं(?) [6]द्वारयुता पङ्क्तिः स्फिक्पिण्डायाम-विस्तारं अर्धाधिकं द्वारमेवं ज्ञात्वा शेषं युक्त्या बुद्ध्या हृद्यं मनोज्ञं कारयेत् ।

ब्रह्मादयोऽपि तद्रूपलक्षणनिश्चयं ज्ञातुमशक्ताश्चित्तभित्तौ तद्रूपं भक्तितूलिकया संकल्प्य वर्णैरालिख्यालोकयन्ति । [7]तस्माद्भक्तिरेव कारणम् । [8]तत्रातोभीक्ष्णदर्शन-योग्यं तत् भगवद्रूपं कल्पयेत् ।

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे कतिचिदवयवमानविधि-र्नामैकपञ्चाशोऽध्यायः[9] ॥



## ॥ अथ द्विपञ्चाशोऽध्यायः ॥

किरीटायतं विंशत्यङ्गुलं मूलं शिरःपरिणाहं मध्यं त्रयस्त्रिंशदङ्गुलमग्रमष्टा-दशाङ्गुलं पद्मकौस्तुभयोः पञ्चाङ्गुलं मध्ये [10]मकरकूटं पार्श्वयोः [11]पत्रपूरितं विस्तारं यवाधिकमिन्द्रियं भूतकोल्काकायामं समात्राङ्गुलं मकरकोल्काकायामं तदर्धविस्तारं [12]मकरस्कन्धारूढबालकनिष्क्रान्तव्यालसंयुतं श्याम-

दिव्यभूषणादीनां मानप्रकारः

1. ट. स्तानाक्षं. 2. छ. समयं. 3. ट. तद्वत्. 4. छ पादाङ्गुष्ठं. 5. ट. त्रिमात्रार्ध-मध्यमा वरं. 6. छ. द्वारयुत.ङ्क्तिभिः. 7. ट. तस्माद्भक्त्यैव कारणं तत्रातः. छ. तस्माद्दर्श नयोग्यं. 8. B. तत्रातोऽभीष्टदर्शनयोग्यं. 9. ग. इत्येकोनाशीतितमःखण्डः. 10. छ. मकरमकुटपार्श्वयोः. 11. छ. पत्रं पुरीमं पुरीमविस्तारं. 12. छ. मकरंस्कन्धारूढं.

मभिषेकं विलक्षणं रत्नाढ्यक्षेपणालङ्कृतमग्रे [1]रत्नपट्टयुतं तन्न् विस्तारं द्व्यङ्गुलं [2]मुक्तादामविभूषितमृजु तिर्यक्कर्णसूत्राभ्यां पार्श्वयोः मध्ये [3]बज्रबन्धाकृतिं शिरश्चक्रायामं द्विरसं प्राणायामं द्वियवं वा विस्तारं स्वनेत्रमेवं सर्वरत्नमयं द्वियवं वा जाज्वल्यमानं सहस्रादित्यप्रभं किरीटं कारयेत्[4] ।

कुण्डले मकराकारे [5]सार्धाङ्गुलकोलकायामे तदर्धोच्छ्रयसमन्विते मुखनिष्कान्तसिंहास्ये [6]पादप्रलम्बितमुक्तादमाढ्ये रत्नोज्ज्वले [7]श्रीवत्सहारं पञ्चाननमध्याननविस्तारं पावकं द्विगुणायतं पद्मरागप्रबन्धाढ्यं वृत्तं तद्बाह्ये चतुरश्रं रत्नबन्धविचित्रितं पार्श्वयोः [8]सूक्तवेशकमौक्तिकावलिशोभितं पार्श्वमुखविस्तारं कोलकं शेषं युक्त्याऽतिमनोहरं रत्नैर्दीप्यमानं कारयेत् । मुक्ताकलापसंयुक्त रूमध्यविलंबितं कोलकविस्तृतमपरं मुखायमं रसं तस्य विस्तारं चतुर्यवाधिकं कोलकं केयूरविस्तारमध्यांगुलायामं मुखं द्विमात्रार्धं मकरायामं तदर्धं तारमारूढबाल[9]मकरास्योद्भूतसिंहकोलकवृत्तवेशक्तनिधिद्वयसमारूढं कोलकायामं तस्य पावकं षण्मुखं रत्नकटकंमुखरत्नविचित्रितं नाभेर्भूताङ्गुलादूर्ध्वं चोदरबन्धनं तन्मध्यविस्तारं पावकं त्रिगुणायतं रत्नविचित्रितं मुक्तादामविभूषितं शेषं युक्त्या करोति । [10]कटिबन्धमष्टाननं विस्तारं [11]त्र्यङ्गुलं मध्ये कृत्रिममुखं [12]कलापशापविचित्रितं [13]नानारत्ननिबन्धनं तदधस्तात्त्रीणि सूत्राणि कल्पयेत् । एवमेवान्यत्र विस्तृतं [14]ज्ञात्वा आभरणान्यलङ्कारयुक्तानि कारयेत् ।

शङ्खचक्रायामं चतुर्ज्वालायुतं चक्रास्यविस्तारं कोलकं चतुर्दशारं मध्यग्रन्थियुतं शङ्खमध्यमविस्तारं प्राणायामं ज्वालायामं भागमेवमनुक्तं [15]तत्र ज्ञात्वा लक्षणयुतं रम्यं कारयेदिति विज्ञायते ।

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे किरीटादिमानविभागो नाम [16]द्विपञ्चाशोऽध्यायः ॥

---

1. छ. रक्त. 2. ट. मुक्तादाममृजुं. 3. छ. व्रजबन्ध. 4. ग. इत्यशीतितमःखण्डः 5. छ सार्धाङ्गुलकायामे. 6. B-पद. 7. B. श्रीवद्वत्साहारं 8. छ. व्यक्तवेश्यक. 9. छ मकरास्योद्भूतसिंहदेहालकावृत्तं द्वेवशाकन्निधिरसद्वयसमारूढं. 10. छ. किरीटबन्धनं. 11. छ द्व्यङ्गुलं. 12. छ. कलापापाशचित्रितं. 13. छ. नवरत्नप्रबन्धनं. 14. छ. ज्ञात्वाभरणान्यलंकारयुतानिकारयेत्. म. आभरणाद्यैः नित्यमलङ्कारयुक्तानि. 15. छ. तत्र तत्र. 16. ग इत्येकाशीतितमः खण्डः.

## ॥ अथ त्रिपञ्चाशोऽध्यायः ॥

अथ स्थानकासन[1]शयनभेदं वक्ष्यामि। विमाने गर्भगृहे दैविकभागं त्रिधा कृत्वा तदपरे तद्विभागे वैकभागे वा स्थानकं स्थाप्यमेतद्योगं भोगं विरहं वीरमिति चतुर्विधं भवति। श्रीभूमिभ्यां रहितं दक्षिणे मुनिना मार्कण्डेयेन अर्चकेन वामे च भृगुणा सहितं दक्षिणे भूम्या वामे मार्कण्डेयेनार्चकेन सहितं वा योगस्थानकं तथा देवीभ्यां रहितं अर्चकेन मार्कण्डेयेन भृगुणा च सहितं दक्षिणे दण्डकेन वामे च गरुडेन युतं योगस्थानकमिति केचित्[2]। तथा[3] देवीभ्यामर्चकमुनिभ्यां च संयुतं भोगस्थानकमेतैस्सर्वैश्च विरहितं वीरस्थानकं देवीभ्यां रहितमर्चकमुनिभ्यां सहितं वा [4]शंखचक्राभ्यां रहितं वीरस्थानकमिति।

स्थानकासनशायनानि. स्थानकम्

तथा दैविकभागं त्रिधा कृत्वा [5]दैविकभागयुतमानुष्ये स्थाप्यमासनम्। तच्च योगं सुखं भोगं वीरमिति चतुर्विधम्। तथा देवीभ्यां रहितमर्चकमुनिभ्यां महीमार्कण्डेयाभ्यां मार्कण्डेयपुण्याभ्यां वा युक्तं योगासनम्। देव्यर्चकमुनिभिर्विनाकृतं वा तथा। देवीभ्यामर्चकमुनिभ्यां वा[6] संयुक्तं सुखासनम्। [7]तद्देवीभ्यां तन्मुनिभ्यां च सहितमपरभित्त्याश्रये चामरधारिणीभ्यां मायासंह्लादिनीभ्यां किष्किंधरसुन्दराभ्यां वा युक्तं मूर्ध्नि सन्निहितहस्तेन नमस्कारकृच्चन्द्रादित्याभ्यां च सहितं भोगासनम्। देव्यर्चकमुनिभिः सहितं [8]रहितं वा देवस्य पादयोरूरुबद्धवस्त्रेण युतं जानूपरिविन्यस्तप्रसारितहस्तद्वयसहितं वीरासनम्। देवीभ्यां रहितमर्चकमहीमार्कण्डेयसहितं वीरासनमित्येके।

आसनम्

किञ्चिद्दैविकभागयुतं मानुष्ये स्थापनीयं शयनम्। तदपि योगं भोगं वीरमिति त्रिविधम्। उपधाने निहितं दक्षिणहस्तं प्रसारितं वामहस्तं तदुपधाननिहितमकुटमूर्ध्वाननं किञ्चिदुन्मीलितं चक्षुः प्रसारितपादं [9]देवं शयनं कृत्वा तदुपरि भित्त्यूर्ध्वभागे नाभिपद्मे समासीनं ब्रह्माणं [10]तद्भित्त्याश्रयान् पञ्चायुधान् पादपार्श्वे स्थिताभ्यां समुद्गतरङ्गाच्छादितजानुभ्या-

शयनम्

---

1. M. शायनेषु. 2. इति द्व्यशीतितमः खण्डः. 3. छ. अथ. 4. छ. चक्रशङ्खाभ्यां. 5. छ. तदेकभागयुत. 6. वा इति छ. पाठे नास्ति, 7. ट. मात्रे तत्. 8. रहितमिति 'छ' कोशे न दृश्यते. 9. छ. शयनं देवं. 10. B. भित्त्याश्रयपञ्चायुधरूपैः.

मुग्रवेग[1]मधुकैटभासुराभ्यामर्चकमहीमार्कण्डेयाभ्यां च सहितं कुर्यादेतद्योगशयनम् । किञ्चिद्द्वारनिरीक्षिताननं दक्षिणहस्तेन धृतमकुटं किञ्चित्कुञ्चितप्रसारितवामहस्तं तदुपधाने योजितदक्षिणकरमनन्तशयने समासीनं पविन्यूरून्यस्तदक्षिणपादं तथा–सीनमह्यूरुन्यस्तवामपदं शयानं देवं तत्पादे निहितद्विहस्तया [2]पादमर्दिन्या श्रिया भूम्या च संयुतं पूर्ववद्ब्रह्माणं पञ्चायुधरूपैश्च सहितं [3]कुर्यादेतद्भोगशयनम् । उपधाने किञ्चिदस्पृष्टमकुटं यथा तथोपधाने निहितदक्षिणहस्तेन धृतमकुटं द्वारं सम्यङ्निरीक्षित-[4]लोचनाननं विस्मयोत्फुल्ललोचनं प्रसारितवामहस्तं द्विहस्तयुतं [5]चक्रशंखयुतहस्ताभ्यां [6]चतुर्हस्तयुतं वा देवं कुर्यादेतद्वीरशयनम् ।

योगार्थी योगमार्गं पुत्रार्थी सुखार्थी च सुखमार्गं धनैश्वर्यभोगार्थी भोगमार्गं वीर्यार्थी वीरमार्गं विरहार्थी विरहमार्गमेतेषामभीष्टमार्गेण ध्रुवबेरं कारयेत् ॥ यौगादिस्थापनफलम्

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे स्थानकासनशयनेषु योगादिभेदो नाम[7] त्रिंपञ्चाशोऽध्यायः

॥ अथ चतुः पञ्चाशोऽध्यायः ॥

ध्रुवबेरस्यैवैषभेदो न कौतुकबिम्बस्य । ध्रुवकौतुकसंयुक्तं ध्रुवार्चनमित्यर्चना द्विविधा भवति । [8]ध्रुवबेरं कौतुकबिम्बं च प्रतिष्ठाप्यार्चनंध्रुव-कौतुकसंयुक्तं सर्वाङ्गमुक्तप्रमाणैः संपूर्णम् । ध्रुवबेरविधानेन शिलयैव कृत्वा ब्राह्मे कौतुकबिम्बस्थाने अर्चनार्थं वर्णविहीनं प्रतिष्ठाप्यार्चनं ध्रुवार्चनम् । एतत्स्थानकासनयोरेवविहितम् । नैवशायने कर्तव्यम् । ध्रुवबेरद्वैविध्यम्

[9]ऐहिकामुष्मिकापेक्षी ध्रुवकौतुकसंयुक्तं केवलामुष्मिकापेक्षी ध्रुवार्चनं कुर्यात् । यथैकस्मिन् गृहे त्रेताग्नीन् कल्पयति [10]तथैकस्मिन् विमाने कौतुक-मौत्सवमर्चेति[11] त्रीणि बेराणि कल्पयेत् । प्रधानार्चनार्थमुत्सवार्थं स्नपनार्थं [12]चैतद्बेराणि । तत्र फलभेदः

---

1. B. मधुकैटभभास्कराभ्यां छ. मधुकैटभाभ्यां 2. ट. पादमर्दनयिकया. 3. छ. कुर्याद्योगशयनम्. 4. छ. लोचनं. 5. छ. चक्रशङ्खधरं. 6. छ. चतुर्हस्तमेव कुर्यात्. 7. ग. इत्यष्टाशीतितमः पटलः. 8. छ. ध्रुवबेरं कौतुकबिम्बस्थाने प्रतिष्ठाप्यार्चनं ध्रुवकौतुकेत्यादि. 9. छ. ऐहिकापेक्षी M. ऐहिकामुत्र. 10. ङ. तत्रैव विमाने. 11. ग. इत्येकोननवतितमः पटलः. 12. छ. चैव तद्बेराणि.

प्रथमप्रतिष्ठायां त्रयाणामप्यलाभे कौतुकबिम्बमेकमेव प्रतिष्ठाप्य [1]पश्चादन्ययोर्लाभे प्रतिष्ठापनं कर्तव्यम् । ध्रुवबेरेण कौतुकबिम्बस्यैकस्यैव संबन्धो नान्येषाम् । तस्मात्तदेकमेव स्थापयेदित्येके ।

कालान्तरे प्रतिष्ठायो विशेषः

[2]ध्रुवबेरस्यानुरूपमेव तत्कौतुकं बिम्बं कारयेत्[3] । ध्रुवबेरे स्थिते स्थितमासीनेप्यासीनं शयने स्थितमासीनं वा । तस्मिन् ध्रुवे शयाने कौतुकबिम्बं शयानं नैव कारयेत् । आसीनेप्यासीनं स्थितं नैवेति केचित् । सर्वेलोत्सवमर्चां च स्थितमेवेत्यन्ये । प्रादुर्भावेष्वपि तत्तद्ध्रुवबेरानुरूपं कौतुकबिम्बं विष्णुं चतुर्भुजं वा कारयेदिति विज्ञायते ।

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे ध्रुवबेरलक्षणं नाम [4]चतुः पञ्चाशोऽध्यायः ॥

## ॥ अथ पञ्चपञ्चाशोऽध्यायः ॥

अथार्चनाकौतुकारंभसत्क्रियां व्याख्यास्यामः । अचलं चलमिति द्विविधं भगवतो रूपम् । तत्र सर्वगं व्योमाभमपोहलक्षणं ब्रह्माद्यैरप्यनभिलक्ष्यं निष्कलमचलम् । तदाराधनं निरालम्बं तत्स्थानीयं ध्रुवरूपम् । तस्मादचलमात्मनो [5]यद्भिन्नं सर्वदेवात्मकं मत्स्या[6]द्यंशजनकं सकलं तच्चलम् । तदाराधनं सालम्बं तत्स्थानीयं कौतुकम् । तस्मान्महा[7]बेरे दोषोऽपि कौतुक[8]संपदा नश्यति । ध्रुवबेरं परंज्योतीरूपं तदलक्षणमपि [9]न दोषाय भवति अरूपत्वात्तस्य । यदा निष्कलं सूक्ष्मं परं ज्योतिर्नारायण इति च कीर्त्यते[10]यदा स्थूलः सकलस्तदा विष्णुरिति । विष्णुः सुवर्णवर्णो रक्तास्यपाणिपादाक्षः शुकपिंछाम्बरधरः किरीटकेयूरहारप्रलम्बकटि[11]सूत्रोज्ज्वलितः शङ्खचक्रधरः श्रीवत्साङ्को रक्तत्रयसमन्वितः सुवर्णरजित[12]ताम्रदारुणा वा तस्मात्सलक्षणमेव कौतुकं कारयेत् । अलक्षणे तु तत्सर्वं भस्मसाद्भवति सकलत्वात्तस्य ।

भगवतो रूपद्वयम्

निष्कलसकलरूपे

---

1. छ. पश्चादपि. 2. इत आरभ्य स्थितं नैवेति केचिदित्यन्तं म ट कोशयोः न दृश्यते ततः पश्चाद्ध्रुवबेरमर्चां च स्थितमेवेत्यन्ये प्रादुर्भावेष्वित्यादि च दृश्यते. 3. ग. इति नवतितमः पटलः. 4. ग. इत्येक नवतितमः पटलः. 5. B. उद्भिन्नं. 6. छ. शयनकं. 7. छ. बेरदोषोऽपि. 8. क. संपदा तस्यापि संपत्, 9. च. तद्दोषाय. 10. ग. इति द्विनवतितमः खण्डः. 11. क. सूत्राद्युज्ज्वलितः. 12. क. ताम्रतरूणामन्यतमेन सलक्षणं.

निरालम्बाराधनं सकलधनिनां श्रेष्ठाश्रमिणाम्। सालम्बं सम्यक् संसारनिष्ठानां भुक्तिमुक्ति[1]फलप्रदत्वात्। अभीक्ष्णदर्शनात् परिचर्यया भक्तिर्भवति। [2]नृणामभक्तानां कृतं सर्वं निष्फलम्। तस्माद्भक्तिहेतुत्वात्सलक्षणं परमपुरुषरूपं कृत्वा श्रिया सहैव संस्थाप्य प्रकृतिपुरुषवार्चयेत्। सालम्बाराधने कौतुकसंपत्सर्वेषां सम्पदिति विज्ञायते। उपासनाद्वयाधिकारिणः

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे रूपद्वयलक्षणं नाम [3]पञ्चपञ्चाशोऽध्यायः ॥

॥ अथ षट्पञ्चाशोऽध्यायः ॥

मणिलोहोपलदारूणि कौतुकार्हद्रव्याणि। तत्रौत्सवं दारुपाषाणरत्नैः नैव कारयेत्[4]। कौतुकादिद्रव्याणि

वज्र मौक्तिक पद्मरागेन्द्रनीलगोमेदवैडूर्य मरकत[5] प्रवाल पुष्यकान्त चन्द्रकान्त सूर्यकान्त लोहिताक्षोत्पल[6] सौगन्धि कल्प स्फटिक कुरुविन्द [7]महानीलाश्चेत्येते सप्तदश शुद्धजातयो मणयो भवन्ति। उपलभेदाश्चानेकाः। तत्रेन्द्रनीलवैदूर्य पद्मराग मरकत प्रवाल वज्राश्चेत्येते चोत्तमाः। सौगन्धिक पुष्यकान्त चन्द्रकान्त सूर्यकान्तोत्पला[8] मध्यमाः। शेषाः कनिष्ठाः। तत्रेन्द्रनीलमयं श्रेष्ठतमं बेरस्येत्याह भगवान् [9]पुरुः। तस्मात्परं नाप्ररमस्ति किञ्चित्। विगतमला निर्व्रणाः स्निग्धाः मनोरमाः सुप्रभाः मणयः। स्फुटितरूक्षवर्णविहीनलघुप्रभान् [10]विवर्ज्य शुभाशुभं परीक्ष्य आलयाद्दक्षिणतः पीठं कृत्वा देवं संस्थाप्यानुज्ञाप्य तस्योत्तरे त्रिवेदिसहितं पीठं कृत्वा दक्षिणे चिन्तामणिं मध्ये कौस्तुभं उत्तरे स्यमन्तकम्। चिन्तामणिं दीप्तिरूपं श्रीकरं दिव्योद्भवमिति अमृतोद्भवं कौस्तुभं महाभद्रं [11]कोर्धशयनमिति स्यमन्तकं सर्वदुःखविनाशनं सुखप्रदं रत्ननाथमिति रत्नत्रयमभ्यर्च्य अग्नावाघारान्ते शान्तिं रत्नत्रयं च घृतमिश्रचरुणा च हुत्वा आशीर्भिराघोष्य पुरुषसूक्तेनाङ्गोपाङ्गानि कल्पयेत्। [12]लक्षणयुतादन्यद्रव्यकृताद्बेरादलक्षणमपि रत्नजं श्रेष्ठम्। रत्नभेदाः दुष्टरत्नानि रत्नन्यासः

1. छ. फलप्रदं स्यात् च. फलप्रदाना 2. छ. नृणां भक्ति विना कृतं. 3. ग. इति त्रिनवतितमः खण्डः. 4. ग. इति चतुर्नवतितमः खण्डः. 5. छ. प्रवालमरकतक. 6. छ. उत्पल. 7. छ. महानीलनीलाश्चेत्येते. 8. छ. उत्पलाः. 9. A. B. पुरुषः. 10. छ. विभज्य. 11. छ. कोर्धायमिति. क. अर्चालयमिति. 12. छ. लक्षणयुतरन्यद्रव्यकृतात्.

मुक्ताफलेष्वष्टसु [1]शंखजनागाब्धिजान्यतीव पुण्यफलदानि। [2]अवेध्यानि तानि जातपीठप्रबद्धान्यर्चयेत्। [3]तेष्वम्भोधिजं विष्णुरूपं परितः सहस्रयोजनस्थनृणामवृद्ध्यरिष्टापमृत्युदारिद्र्यादीन्विनाशयति। तस्मात्सम्यक् पूजयेत्[4]।

मुक्ताफलानि

सुवर्णरजितताम्रकांस्यत्रपुसीसारकूटवृत्तलोहवैकृंतनायांसि लोहभेदा भवन्ति। सौवर्णं पौष्टिकं राजितं कीर्तिदं ताम्रजमृद्धिप्रदं कास्यं प्रजाकरं तेनापि वैष्णवं रूपं न कारयेदित्यृषयो वदन्ति। कांस्येन वसवः साध्या वृत्तलोहेन मरुतः [5]पित्तलया दानवाः त्रपुणा असुराः सीसेन पिशाचा आरकूटेन रक्षांस्ययसा भूताः सर्वलोहेन कार्याः। सुवर्णेनैव भगवन्तं त्रपलेन शंकरं रजितेन विरिंचं च। ताम्रेणादित्यं कुर्यादिति ऋषयो वदन्ति। बहुना किं प्रलापेन सुवर्णं हरिरुच्यते तस्मात् [6]सुवर्णेनोत्तममिति काश्यपः॥

लोहभेदाः

देवताभेदेन लोहभेदः

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे कौतुकादि द्रव्यनिर्णयो नाम [7]षट्पञ्चाशोऽध्यायः॥

## ॥ अथ सप्तपञ्चाशोऽध्यायः॥

मधूच्छिष्टारम्भम्। [8]देवागारोत्तरे अग्निनोद्दीप्याहतेन नववस्त्रेणोत्पूय 'अग्निमील' इत्यभिमृश्य शुद्धपात्रे सिकतमादाय देवेशमाराध्य प्रोक्षणैः प्रोक्ष्य आत्मसूक्तं जप्त्वा पश्चिमेऽग्निं परिस्तीर्य महाशान्तिं [9]पार्षदं च हुत्वा सिकतमभ्यर्च्य मध्येऽष्टदलं कमलं ध्यात्वा तन्मध्येऽनिरुद्धं[10] ब्रह्माणं वाष्टदलेषु हंसं संस्थाप्यात्मज्ञः सहस्रशीर्षादिना रूपं संकल्प्य शिल्पिना लक्षणयुतं कारयेत्[11]। ध्रुवायामं त्रिधा कृत्वा एकभागमुत्तमं नवैकं हित्वा त्रिभागैकमुत्तममध्यममुत्तमोत्तमं [12]भूतांशाद्वेदशांशमुत्तमाधममाद्याद्‌द्व्यंशे द्विभागं मध्यमोत्तमं तद्रसांशाद्भूतांशं मध्यम-

मधूच्छिष्ट-क्रियाप्रकारः

1. ट. शंखजनागाब्जजानि. 2. छ. अवेध्यानि जातमयपीठबन्धानि. 3. छ. तेष्वं-भोजं. 4. ग. इति पञ्चनवतितमः खण्डः. 5. क. पित्तलोहेन. 6. क. सुवर्णमित्युक्तं. 7. ग. इत्यष्टनवतितमः पटलः (तत्र पाश्चात्यपटलद्वयं न लक्षितम्) 8. छ. देवागारस्योत्तरे पार्श्वे अग्निनोद्दीप्यमानं. 9. ट परिषदं. 10. . ट. अनिरुद्धं ब्रह्मणा वेष्ट्य दलेषु. छ. ब्रह्मणां 11. ग. इत्येकोनशततमः खण्डः. 12. छ. हृतांशं उत्तमोत्तमादद्व्यंशे त्रिभागं मध्यमोत्तमं हृतं मध्यमध्यमं तद्गुणांशाद्द्व्यंशं मध्यमाधमं.

मध्यमं तत्गुणांशाद्द्व्यंशं मध्यमाधमं प्रथमानलभागैकमधमादुत्तमं तत्त्र्यंशाद्द्वि-भागमधममध्यममेतद्गुणांशाद्द्व्यंशमधमाधममिति । प्रतिमात्रिभागैकं पीठं तत्त्र्यंशं पद्मं शेषं पूर्ववदाचरेत्[1] ।

ज्ञानदेहालंकारजाः प्रभाः प्रोक्ताः । देवदेवस्य विष्णोस्तु प्रभास्तिस्रः रुद्रस्य द्वे धातुः श्रीभूम्यादीनामेका । इन्द्रादीनां मकुटाश्रया बिम्बकल्पितेन लोहेनैव[2] पीठबंधादीन् कल्पयेदन्यथा [3]दोषाय भवति । प्रभाविस्तारं [4]मुखार्धं तस्मिन् ज्ञानभाण्डेचियो(?) यष्टिविस्तारं कोलकं देहजाया[5]भागं यष्टीनामुपरि रश्मिजालां स्निनतानूर्ध्वाग्रान् दक्षिणे दक्षिणावर्तान् वामे वामावर्तानेवं कुर्यात् । इन्द्रचापवद्यष्टिश्च । अग्निशिखावद्रश्मिज्वाला । [6]मकुटाच्चतुरंगुलमाहृत्य शंखचक्रधृत् हस्तयोर्भागं संवृत्य पीठपार्श्वयोर्योजयेत् । एवं रश्मिजाला [7]नातिनिबिडा नातिविरला भवेयुः । उभयोः पार्श्वयोः [8]समग्राश्चैवं कृत्वा बहिर्मृत्तिकया आलिप्य कर्तुरनुकूलर्क्षे रात्रावेव [9]शुभर्क्षे शुभहोरायां यथोचितं लोहमादायोद्दीप्य [10]स्रावयेत् । तत्काले देवदेवमनुस्मृत्याघोष्य शक्तितो दक्षिणां दद्यात् ।

तत्राङ्गहीनादिदोषेषु पुनर्लोहवदाचरेत्[11] । बिम्बं तल्लक्षणयुतं संशोध्य पद्मपीठे रत्नानि मन्त्रतो न्यस्य तत्र संस्थाप्य ततः शिल्पिना दृढीकरणं कारयेत् ।

कौतुकोत्सवार्चाभेदेन त्रीणि बिम्बान्यगारे स्थापयेत् । ब्राह्मे कौतुकं [12]दक्षिणे स्नापनं वामे चौत्सवम् । स्थापिते कौतुकेऽनवद्ये लोहगौरवसंवेशं न कुर्यात् । यदि कुर्यात्कर्तुः मृत्युर्भवति । तद्दोषदर्शने सद्यस्तयोरेकं नियोजयेत् । [13]एकस्मिन्नालये चैकवपुरिति केचिद्वदन्ति । [14]एवं प्रकल्पितं बिम्बं विधिनाऽधिवास्य स्थापयेदिति काश्यपः ॥

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे मधूच्छिष्टक्रियाबिम्बनिर्माणक्रियाविधिर्नाम [15]सप्तपञ्चाशोऽध्यायः ॥

---

1. ग. इति शततमः खण्डः. 2- छ. कल्पलोहेनैव. 3. छ. दोषाभवन्ति. 4. छ. मुखाध्यर्धमस्मिन् ज्ञानकान्वयां(?) 5. छ. भवनं वरिजातामुपर्युपरि. 6. छ. मकुटाः. 7. छ. निबिडाः. 8. समग्राश्च. 9. छ. ध्रुवशुभहोरायां. 10. छ. आस्रावयेत्. 11. बिम्ब-मित्यादि कारयेदित्यन्तं छ कोशे न दृश्यते. 12. छ. दक्षिणेर्चां वामे चोत्सवं च स्थापयेत्. 13. च. एकस्मिन्नालये चैकमेव वपुरिति छ. पुरुति घ. पूरिति 14. ट. एवं बिम्बं. 15. ग. इत्येकशततमः खण्डः.

## ॥ अथाष्टपञ्चाशोऽध्यायः ॥

अङ्कुरार्पणम्

अथाङ्कुरार्पणविधिं व्याख्यास्यामः । देवेशस्य यानि कर्माणि भूपरीक्षादीनि तेषां पूर्वस्मिन् नवमे सप्तमे पञ्चमे[1] त्र्यहे वा अङ्कुरार्पणं कुर्यात्[2] । अङ्कुराननर्पयित्वा कृतं सर्वं निष्फलं भवति । भगवत्कर्मण्यनुक्तेऽपि अङ्कुरार्पणे कृते भगवान् प्रीतो भवेत् । तस्माद्यत्नतः कुर्यात् ।

पालिकादीनां लक्षणम्

तदर्थं पालिकाः छिद्रकुम्भांञ्छरावांश्चाहरेत् । प्रत्येकं षोडश द्वादशाष्टौ चत्वारो वा ग्राह्याः । पालिकानामायामं द्वितालं [3] ध्रुवबेरमुखं तदर्धंमूलमानुपूर्व्येण संक्षिप्तं छिद्रकुम्भानां [4]सार्धतालायामं मूलं भागं चतुर्दिक्षु मध्यतो भागविस्तृतपञ्च[5]द्वारयुतं शरावाणां मुखं तालविस्तारायामं षडङ्गुलमुन्नतं मूलं भागमित्येवं संगृह्य देवालयस्योत्तरेऽभिमुखे वा गोमयेनोपलिप्य पञ्चवर्णैरलङ्कृत्य पञ्चहस्तायतां हस्तविस्तृतां द्वितालविस्तृतचतुर्द्वारयुतां [6] व्रीहिभिस्तण्डुलैर्वा [7]पङ्क्तिं कृत्वा तन्मध्ये षोडशांगुलायामं तालोन्नतं त्रिवेदिसहितं ब्रह्मणः पीठं कृत्वा शेषादीनां च यथालाभमानेन पीठं कुर्यात् । यजमानो वस्त्राद्यैर्गुरुमभिपूज्य कार्यमावेद्यानुग्राह्य कर्मेदं कुर्विति प्रणम्य [8] याचेत ।

तत्र प्रयोगः

गुरुरपि तत्कर्म करिष्यामीति संकल्प्य रात्रिपूजावसने देवस्य विशेषपूजां कृत्वाऽऽरभेत । पङ्क्तिमध्ये पीठे ब्रह्माणमभ्यर्च्य हविर्निवेद्य पूर्वद्वारोत्तरे शेषं दक्षिणद्वारपूर्वे वक्रतुण्डं पश्चिमद्वारदक्षिणे पङ्क्तीशमुत्तरद्वारपश्चिमे सोमं तत्पूर्वे शान्तमैन्द्राद्यैशानान्तं जयाद्यप्सरसोऽभ्यर्च्य यथाशक्ति हविर्निवेद्य दक्षिणां दद्यात् । पालिकाकुम्भयोर्मध्ये नववस्त्रैरावेष्ट्य गोकरीषयुतमृद्भिः सिकताभिर्वाऽऽपूर्य परितः पङ्क्तौ विष्णुगायत्र्या संस्थाप्य पालिकासु मेदिनीं छिद्रकुम्भेषु राकां शरावेषु [9]सिनीवालीं नाम्नाऽभ्यर्च्य पुण्याहं वाचयेत् । कङ्कुमुद्गयवनिष्पावप्रियङ्गुगोधूमचणकतिलनिल्वमसूरसर्षपाणि धान्यानि [10] सर्वालाभे मुद्गं वा

---

1. त्र्यहे इति छ कोशे नास्ति. 2. छ. अङ्कुरानर्पयेत. 3. छ. ध्रुवबेरमुखायामं मुखं तदर्धं मूलं. 4. छ. सार्धतालमायामं. म. तालायाम. 5. छ. द्वारायता·. इत आरभ्य चतुर्द्वारयुतामित्यन्तं छ कोशे न दृश्यते. 6. व्रीहिभिरित्येतत्पूर्वं "कुम्भाः किञ्चिच्छेदेन पालिकावच्छरावा इत्यंशः क कोशे दृश्यते।" 7. छ. परितो दण्डवत्पङ्क्तिकृत्वा. 8. छ. प्रचयेत्, 9. छ. सिनीवालीमिति. 10. A. सर्वाभावे.

पूर्वमेव यावदङ्कुरदर्शनं तावज्जलेषु निक्षिप्य कांस्यपात्रे धान्यान्यादाय तेषु सोममभ्यर्च्य 'सोमं राजान' मित्यभिमृश्य तूर्यघोषणं कारयित्वा तद्धान्यान्यादाय विष्णुसूक्तं 'सोमं राजान'मिति च जपन् [1]अङ्कुरानर्पयित्वा वारुणमन्त्रेण जलसेकं कृत्वा [2]मृद्भिः पात्रैः पालिकादीन् पिधाय गुप्ते देशे निधापयेत् ।

[3]तदर्वाक् सद्यश्चेदेवं कृत्वा पुण्याहान्ते श्वेततण्डुलैः [4]पुष्पैश्च पालिकादीन् तत्तन्मन्त्रेण पूरयेदेतत्सद्योंकुरमित्याचष्टे भृगुः । दिवाङ्कुरार्पणं देवस्याप्रीतिकरं तस्मात् रात्रावेव कुर्यात् ॥ सद्योङ्कुरम्

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे अङ्कुरार्पणविधिर्नामाष्ट-
पञ्चाशोऽध्यायः[5] ॥



## ॥ अथैकोनषष्टितमोऽध्यायः ॥

अथ [6]विष्णोर्देवेशस्य प्रतिष्ठाविधिं व्याख्यास्यामः । सोऽव्ययः सर्वव्याप्याकाशोपमो [7]निष्कलः परमात्मा ज्ञानेन भक्त्या च युक्तस्य अन्तः सन्निहितो भवति । 'आत्मा गुहायां निहितोऽस्य जन्तो'रिति श्रुतिः । तस्माद्भक्तिमता तेन[8] सकलं सङ्कल्प्य भक्त्या मन्त्रैश्च प्रतिष्ठापिते बिम्बे भक्तानुकम्पया सकलः तद्बिम्बे समाविष्टः देवः प्रतिष्ठितो भवेत् । अव्यक्तं शाश्वतं अनादिमध्यान्त[9]मतीन्द्रियं देवैरप्यनभिलक्ष्यं यद्वैष्णवं पदं तत्प्राप्तिफलं तदर्चनम् । तस्य मूलं प्रतिष्ठा । तद्विधानं शृणुध्वम् । प्रतिष्ठाविधिः

मासेषु फाल्गुनचैत्रवैशाखतैष्यज्येष्ठेषूत्तमम् । श्रावणाश्वयुजकार्तिकेषु मध्यमम् । प्रोष्ठपदाषाढयोरधमम् । त्वरितोऽपि मार्गशीर्षमाघयोः विवर्जयेत् । यथोक्ततिथिवारनक्षत्रे शुभे करणे शुभराशावनिन्दिते[10] शुभग्रहैर्युक्ते तदीक्षिते वा पूर्वाह्णे दिवैव प्रतिष्ठामाचरेत् । मुहूर्तविचारः

1. A. अङ्कुरानर्पयेत्. 2. छ. मृत्पात्रैः. 3. छ. उक्तादिनादर्वाक् सद्यश्चेत्. 4. छ. पुष्पैः. 5. ग. इति द्व्युत्तरशततमः खण्डः. 6. च. देवेशस्य विष्णोः. 7. छ. निष्कलं. 8. च. अनेन. 9. च. म. अनिन्द्रियं. 10. ट. म. अतिद्रुते.

तदर्थं [1]यजमानः पूर्वतो गुरुं स्थापकाद्यानध्वर्यूंश्च वरयेत् । पत्न्यपत्यरहितं दुर्वृत्तनास्तिककुब्जवामनातिदीर्घहीनांगातिरिक्ताङ्गपङ्गुबधिरान्धकुनख-श्यावदन्तशिपिविष्ट[2]षण्डान् क्षयकुष्ठापस्मारोन्मादादिपापरोगयुतान् [3]वेददूषकपाषण्डान् [4]अन्यकर्मपरान् अन्यदेवताभक्तानपि [5]वर्जयित्वा वैखानससूत्रोक्त-विधानेन निषेकादिसंस्कारक्रियायुक्तान् मन्त्रकल्पविदः [6]नित्यस्वाध्यायपरान् मर्मज्ञान-चेनादिसर्वप्रयोगज्ञान्[7] वैखानसविदः साग्नीनाहूयाभिपूज्य तेषु ज्ञानोत्कटं श्रुतवृत्त-शीलसंपन्नं [8]भूपरीक्षादिप्रतिष्ठान्तेष्वर्चनाद्युत्सवान्तेषुक्रियाप्रयोगविशेषज्ञं यथोक्तमन्त्रां स्तत्प्रायश्चित्तं च सम्यग्वेत्तारमास्तिक्ययुतं प्रसन्नमानसं निष्कलसकलध्याने[9] निश्चलं शान्तिशक्तिसमायुक्तं नारायणपरायणं तत्कर्मपरं वैष्णवं [10]भक्तिमन्तमेकं गुरुं वरयित्वा

आचार्यवरणम्

तथैवंविधगुणान् [11]स्थापकांश्चतुरस्त्रीन् द्वौ वा बिम्बप्रतिष्ठापनार्थं पौण्डरीकाग्नेरध्वर्युमेकं पञ्चाग्नीनां पञ्च वास्तुहोमस्यैकं परीवार[12]होमा नामध्वर्यून् ब्रह्मसोमावृत्विजौ द्वौ होतारमेकं सर्वदेवार्चनार्थं चत्वारो द्वौ वा [13]स्थापनार्थं प्रतिबेरमेकमेवं पदार्थिनः सम्यग्वरयित्वा देवयजनं करिष्यमीति ताननु-

स्थापकदिवरणम्

ज्ञाप्य तैरनुज्ञातो यजमानः [14]स्वकिल्बिषानुरूपं कृच्छ्रं चरित्वा शुद्धात्माजितेन्द्रियो यावत्प्रतिष्ठान्तं तावद्धविष्यभोजी भूत्वा आलयार्चन-मेतद्देवयजनमारभ्य पूर्वोक्तैरेव कारयेत् । तेऽपि केशश्मश्रूणि वापयित्वा शुद्धदन्ता विधिनैव स्नाता यथाकामं पुरुषसूक्तपूर्वं [15]यजुस्संहितां स्वाध्यायेन ब्रह्मयज्ञं कुर्वन्तः [16]प्राजापत्यं पादकृच्छ्रं त्रिरात्रमेकाहं वा कृच्छ्रं चरित्वा यावत्प्रतिष्ठान्तं [17]तावदनन्यतत्पराः त्रिषवणस्नायिनश्चैककाले [18]हविष्याशिनो जितेन्द्रिया भवेयुः ॥

कृच्छ्राचरणादि

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे आचार्यलक्षणं नाम
एकोनषष्ठितमोऽध्यायः[19] ॥

---

1. च. म. पूर्वतो यजमानः. 2. च. पाषण्डान्. 3. देवदूषक च. गलितं तत्र म कोशे. 4. ठ. म. अन्यकर्मपरानितिकोशयोः नास्ति. 5. च. विवर्जयित्वा. 6. च. नित्य-स्वाध्यायनारायणपरायणान् जन्मज्ञानार्चनादित्यादि. 7. वैखानसविद इति ट कोशे नास्ति. 8. ट. म. भूपरीक्षाद्युत्सवान्तेषु. 9. च. ध्यान निश्चलं. 10. च. धीमन्तं. 11. च. द्वौ स्थापनार्थं. 12. च. देवानां. 13. च. स्थापनार्थमेकं. 14. ट. म. स्वस्वकिल्बिष. 15. च. यजुस्संहितास्वाध्यायेन. 16. ट. प्राजापत्यपादकृच्छ्रं. 17. च. अनन्यपराः. 18. A. हविष्यभोजिनः. 19. ग. इति त्र्युत्तरशततमः खण्डः.

## ।। अथ षष्टितमोऽध्यायः ।।

अथातो नवबिम्बस्याक्ष्युन्मेषणम् । प्रतिष्ठादिवसात्पूर्वं पञ्चमेहऽन्यमन्त्रकं शिल्पिना कारयित्वा समन्त्रकं च कुर्यात् । देवालयस्योत्तरे प्रपायां श्रामणकाग्निकुण्डं कृत्वा वास्तुहोमविधिना वास्तुहोमं हुत्वा आलयाभिमुखे [1] चतुरश्रां प्रपां कृत्वा तोरणपूर्णकुम्भवितानध्वजदर्भमालादिभिरलङ्कृत्य तन्मध्ये चौपासनाग्निविधिना कुण्डं कृत्वाऽग्निमाधाय तथैवाघारं हुत्वा पुरुषसूक्तं विष्णुसूक्तं जयादीन् मूर्धादि[2]पादपर्यन्ताङ्गनामभिरङ्गहोमं हुत्वा विमानं चेत् नवं स्थूप्याद्युपानान्ताङ्गनामभिर्विमानदेवताभ्यो हुत्वा देवाभिमुखे सुवर्णशृङ्गां रौप्यखुरां पूर्णपुष्टाङ्गां वस्त्रबन्धां कांस्यदोहनां सवत्सां गां स्थापयित्वा गोदानसूक्तेन सर्वाङ्ग-मभिमृश्याग्निं परिषिच्य भूमिदैवत्यं [3]वारुणमैन्द्रं वायव्यमाग्नेयं वैष्णवं व्याहृत्यन्तं जुहुयात् । यजमानेन वस्त्राङ्गुलीयाभरणाद्यैरलङ्कृत्याभिपूजितो गुरुः पादौ प्रक्षाल्याचम्य सुवर्णेन कृतं पात्रं तूलिकामप्यादाय तत्पात्रे [4]वर्णं गृहीत्वाभ्यर्च्य देवस्य दक्षिणस्या-मुत्तराभिमुखः स्थित्वा देवाभिमुखे प्रच्छन्नपटं कृत्वा महीसूक्तेन वर्णमभिमृश्य देवं ध्यायन् पुरुषसूक्तेन दक्षिणे नयने [5]वामे चैकाक्षरादिना महाभूतपरमात्माधिदैवतानि पक्ष्मवर्मरक्तशुक्लकृष्णज्योतिर्मण्डलानि [6] यूकाचित्रेण वर्णेन कृत्वाक्ष्युन्मेषयेत् । [7]गोदानसूक्तेन देवस्य तां गां दर्शयित्वा 'श्रिये जात' इति श्रीदेव्याः [8] मेदिन्या-दिना महीदेव्याश्च अन्यदेवानां तत्तन्मन्त्रेणाक्ष्युन्मेषणं [9]तथैव कृत्वा पुण्याहं वाचयेत् ।

अक्ष्युन्मेषणम्

ध्रुवबेरस्य वर्णहीनस्य च नवकौतुकबिम्बादीनां च वर्णं विना सुवर्णसूची-दृढकरीभ्यामेव पक्ष्मादीनि संकल्प्याक्ष्युन्मेषणं कुर्यात् । अथ वा ध्रुवबेरस्य प्रतिष्ठादिनात्पूर्वं पञ्चमेऽहन्यमन्त्रकं तृतीये द्वितीये वा समन्त्रकमक्ष्युन्मेषयेदिति केचित् । अग्नौ वैष्णवं हुत्वा अन्तहोमान्ते नवकौतुकबिम्बादीनामधिवासमारभेत ।।

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे अक्ष्युन्मेषणविधिर्नाम [10]षष्टितमोऽध्यायः ।।

---

1. ट. म. चतुरश्रं. 2. म. पादान्ताङ्गानां. 3. म. वारुणान् मन्त्रान्. 4. म. सुवर्ण. 5. च. चैकाक्षरादिना वामे च. 6. B. यूकमात्रे वर्णेन कृत्वा. म. यूक्षाग्रेण. 7. म. गोसूक्तेन. 8. ग. मेदिनी देवीति. 9. तथैवेति छ कोशे नास्ति. 10. ग. इति चतुरुत्तरशततमःखण्डः.

## ।। अथैकषष्टितमोऽध्यायः ।।

[1]अथाधिवासनम् । आलयस्योत्तरे प्रपां कृत्वा देवं प्रणम्य आपोहिरण्य-पवमानैर्बिम्बं प्रमार्ज्य वस्त्रादिभिरलङ्कृत्य जलद्रोणीमादाय संशोध्य अवटे वरुणं संपूज्य 'वसोः पवित्र'मिति पञ्चगव्यैरापूर्य पञ्चशयनानि वासांसि वा आस्तीर्य विष्णुसूक्तेन तत्र प्राक्छिरः शाययेत् ।

(अधिवासनम्) (पञ्चगव्येषु)

तद्दिनेऽतीते स्नात्वा विष्णुसूक्तेन बिम्बमुद्धृत्यालङ्कृत्य जलद्रोणीं संशोध्य 'शन्नोदेवी'रिति [2]गोक्षीरेणापूर्य पद्मोत्पलादिपुण्यपुष्पाणि अवकीर्य क्षीरं क्षीरोदधिं शयनमनन्तं देवमनन्तशायिनं ध्यात्वा '[3]समुद्रवती शृङ्ग' इति प्राक्छिरः शाययेत् । अथ वा दर्भाग्रैः कुशाग्रैर्वा निक्षिप्य जलेनैवापूर्यात्रैव शाययेदिति केचित् । तद्दिनेऽतीते [4]प्रभाते स्नात्वा विष्णुसूक्तेन बिम्बमुद्धृत्य संस्नाप्यालङ्कृत्य पुण्याहं कृत्वा वारिपूर्णं तटाकं नदीं वा गत्वा पुण्यतीर्थं शिवं पुण्यदं देवावासमित्यभ्यर्च्य शयनमास्तीर्य जलं शीतोदधिं ध्यात्वा देवं तथैव शाययेत् । अलाभे जलद्रोण्यां वा शाययेत् । अहर्वा यामं वा मुहूर्तं वा [5]एवमेवं प्रत्येकमधिवासं कुर्यादित्यन्ये । अक्ष्युन्मेषणहोमान्ते त्र्यहमेवं जलाधिवासनं [6]कुर्यात् इति केचित् ।

(क्षीराधिवासः) (जलाधिवासः)

अथाङ्कुरार्पणादूर्ध्वं प्रतिष्ठादिवसात्पूर्वस्मिन्नेव संभारानाहरेत् । शमीजातमश्वत्थं तदलाभेऽन्यमरण्यर्थमाहृत्य त्वगाद्यपोह्य संशोष्य चतुर्विंशत्यङ्गुलायामां द्विकोलकोत्सेधां षडङ्गुलविस्तृतामरणिं तावत्प्रमाणामूर्ध्वपट्टिकां द्वितालायामं प्रादेशपरिणाहं मूलाग्रयोरेकाङ्गुलशिखायुतं मन्थदण्डं च कृत्वा यज्ञोक्तवृक्षैः स्रुवादींश्च कारयेत् । स्रुवस्यायामं द्विप्रादेशं मूलं प्रादेशनाहं तदर्धनाहं कण्ठं शनैः कृशमग्रे प्रादेशपरिमण्डलं द्व्यङ्गुलविस्तृतं माषमात्र-निम्नयुतं [7]मध्ये सिरावद्व्रीहिमात्रोन्नतमन्तःसुषिरं जुह्वाश्चायामं द्वितालं तदर्धनाहं पद्ममुकुलोपमं मूलं मूलार्धपरिणाहं कण्ठमग्रे [8]कृशमूर्ध्वप्रदेशंषडङ्गुलं चतुरश्रं चतुरंगुल-विस्तृतमष्टाङ्गुलायामं पार्श्वत्रयसमन्वितमेकाङ्गुलविस्तारोन्नतभित्तिकं मध्ये निम्नयुतम् ।

(प्रतिष्ठासम्भाराहरणम्) (यज्ञपात्राणि)

---

1. च. अथाधिवासम्. 2. म. क्षीरेणापूर्य. [3]. ट. म समुद्रशिश्रृंगेति. 4. प्रभात इति ट. म. कोशयोः नास्ति. 5. च. एवं प्रत्येकं. 6. म. एव कुर्यात्. 7. च. मध्य इत्यारभ्य सुषिरमित्यन्तं तथा कृशमूर्ध्वप्रदेशं षडङ्गुलं चतुरश्रमिति 8. ट कोशे न दृश्यते.

ा यमद्वयं तदर्धनाहमूलं मूलार्धनाहं कण्ठं शनैः शनैः कृशमूर्ध्वे प्रदेशे
ामर्धाङ्गुलोन्नतैकाङ्गुलिविस्तृतभित्तिकं मध्ये प्रादेशमात्रवृत्तं चतुर्यवाव-
ादूर्ध्वे त्रिकोणं मुकुलोपमं षडङ्गुलनिम्नमामुकुलान्तं [1]घृतधारायुतम् ।
द्वितालं घनमेकाङ्गुलमग्रं भागविस्तारं [2]षडङ्गुलायाममूलं पञ्चाङ्गुलायामं
मध्ये कीलकं शनैः सक्षिप्तं कृत्वा तोरणार्थमश्वत्थो-
न् सर्वालाभे अश्वत्थं वा आहृत्य पञ्चहस्तोत्सेधानि तोरणादयः
ि [3]चतुर्हस्तविस्तृतानि त्रिहस्तविस्तृतानि वा मध्ये अरत्निमात्रति-
रणानि कारयित्वा दर्भमाला रज्जूः [4]पर्वणि पर्वणि द्वितालायामलम्ब-
[5]मालां रज्जुं कारयेत् । कपिलाया घृतादीन्यलाभे [6]
लाशाश्वत्थखदिरबिल्वशमीवटोदुम्बरसमिधः सर्वालाभे होमद्रव्यादीनि
ा । साग्रान् दर्भान् । वस्त्राणि दुकूलादीनि कार्पासादीनि श्वेतानि
र्णेनाष्टमङ्गलपञ्चायुधवर्गचिह्नादीनि कारयित्वा रत्नधातु- अष्टमङ्गलादीनि
नामलाभे सुवर्णं बीजानां यवं धातूनां पारदं वा अलब्ध-
ादीन् संभारान् संभरति । प्रतिनिधिः

ष्ठादिषु यथोक्तद्रव्यहीने ग्रामस्य यजमानस्यापि द्रव्यहानिः क्रियाहीने
त्रहीने स्वाध्यायायुष्यहानिः [7]श्रद्धाभक्तिहीने सर्वहानिः न्यूने दोषश्रुतिः
कारयेत् ।

या त्रिवृतां रज्जुं कृत्वा आलयाभिमुखे गोमयेनोपलिप्य पञ्चवर्णैरलंकृत्य
वा तत्रारणिं [9]प्राङ्मुखः संन्यस्य मन्थदण्डे विष्णुमरण्यां
ायामग्निमभ्यर्च्य मौञ्जीरज्जुं गृहीत्वा मन्थमावेष्ट्य अग्निमन्थनम्
योजयित्वा 'जातवेदस' इति मन्थनं कुर्यात् । [10]परितः
संयोज्य वैश्वानरसूक्तं जप्त्वोत्पन्नमग्निं पात्रे समादाय 'अयं त इध्म'

---

घृतधारायुतं. 2. क षडङ्गुलायामार्धमूलं, च. षडङ्गुलायामवच्चमूलं ग. पडङ्गुला-
छ. षडङ्गुलायाममग्रं मूलं. 3. म द्विहस्त. 4. पर्वणीत्येव. ट. म.पाठ.
गं रज्जुं 6. म. अलाभे इति न दृश्यते. 7. प्रतिष्ठादिषु श्रद्धाभक्तिहीने
त. कोशे न दृश्यते. 8. म. प्रक्षिप्य. 9. प्राङ्मुखं 10. च. ततः.

इति इन्धनानि प्रक्षिप्य 'घृतप्रतीक' इति प्रज्वाल्य 'आयुर्दा' इति प्रणम्याप्रमादं[1] निदधाति । सर्वहोमानामेषोऽग्निरिति विज्ञायते ।

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे संभाराहरणं
[2] नामैकषष्टितमोऽध्यायः ॥



## ॥ अथ द्विषष्टितमोऽध्यायः ॥

ब्राह्मणभोजनम्

यागशाला-लङ्करणम्

कुण्डादिकल्पनम्

अथ ब्राह्मणान् यथाशक्ति भोजयित्वा आलयात्पुरतो दक्षिणे वा यागशालां षोडशस्तम्भयुतां [3]चतुर्हस्त विस्तृतस्तम्भमध्यां पञ्चहस्तोच्छ्रयां [4]तालोच्छ्रयतलां [5]चतुरश्रां प्रपां कूटं वा यथोचितं कृत्वा चतुर्दिक्षु हस्तमात्रं खनित्वा तोरणान्यादाय [6]वेदरूपाणि ध्यात्वा यथाक्रमेण अश्वत्थोदुम्बरप्लक्षवटैः कृतानि प्रागादिचतुर्दिक्षु 'अग्निमीले' 'इषे त्वोर्जेत्वा' 'अग्न आयाहि' 'शन्नो देवी'रिति स्थापयित्वा पूर्णकुम्भकदलीक्रमुकवितानध्वज-दर्भमालास्तम्भवेष्टनमुक्तादामपुष्पमालाद्यैः यथाशक्ति यागशालामलङ्कृत्य तन्मध्ये शयनं चतुर्दिक्षु चतुर्हस्तायतं चतुरश्रं द्वितालोच्छ्रयं [7]अर्धाधिकं बिम्बमानायतं वा परिकल्प्य तथैवालङ्कृत्य शयनात्प्राच्यां [8]श्रामणकाग्नि-कुण्डविधिनाग्निकुण्डं सन्न्यस्य तत्प्राच्यां औपासनाग्निकुण्डविधानेनाहवनीयस्य शयनाद्दक्षिणस्यां त्रिंशदङ्गुलिभिः भ्रमिं कृत्वा तद्वृत्ते दक्षिणार्धेनोर्ध्ववेदिकमन्वाहार्यस्य प्रतीच्यां [9]सार्धाष्टादशाङ्गुलिभिर्भ्रमीकृत्य [10]तद्वृत्तेनोर्ध्ववेदिकं गार्हपत्यस्य उदीच्यां सपादयवत्रयसहिताष्टाङ्गुलिभिः संयुक्त[11] चत्वारिंशदङ्गुल्यायतैकभुजेन त्र्यश्रोर्ध्ववेदिकं पूर्वाग्रमावसथ्यस्य अन्वाहार्यावसथ्यगार्हपत्याणां कुण्डस्यवेदिद्वयं प्रत्येकं भागोन्नतविस्तारं मध्ये निम्नं षडङ्गुलमन्यत्सर्वमौपासनकुण्डवत् । यथा मध्ये विष्णुः प्राच्यां पुरुषः दक्षिणे सत्यः प्रतीच्यामच्युतः उदीच्यामनिरुद्धः तथा तत्तद्दिक्षु [12]पञ्चमूर्त्यर्थानां पञ्चा-

---

1. प्रमादमिति सर्वत्र. 2. ग. पञ्चोत्तरशततमः खण्डः. 3. ग. त्रिहस्तविस्तृतस्तम्भ-मध्यां. 4. म. तालोन्नततलां. 5. च. चतुर्हस्तमात्र. 6. ट. विष्णुरूपाणि च. म. वेदरूपाणीति 7. च. अर्धायतं. 8. च. औपासनकुण्डविधानेन. 9. च. मनुभिश्चार्धेन सहितैः भ्रमीकृते. 10. च. तद्वृत्तेन 11. च. चत्वारिंशदङ्गुल्यायतत्रिभुजेन त्र्यश्रोर्ध्ववेदिकं. 12. च. पञ्चमूर्त्यर्हाणां.

नामेवमग्निकुण्डानि कृत्वा सभ्याद्दक्षिणपूर्वे पौण्डरीकाग्निकुण्डं गार्हपत्याग्निकुण्डवत् वृत्तमेकैकं भागोन्नतं त्रिवेदिसहितं षडङ्गुलायतषोडशदलैरधोवेदिकं मध्ये निम्न-मष्टाङ्गुलमन्यत्सर्वमौपासनवत् । एवमग्निकुण्डानि सिकताभिः मृदा वा कुर्यात् । सभ्याग्निकुण्डमध्यनिम्नमष्टाङ्गुलमिति केचित् ।

परिवाराणां कुण्डानि

सर्वपरिवारदेवानां बिम्बं कृत्वा तत्तदालयाभिमुखे च औपासनविधिना महाऽग्निकुण्डं शयनं कुम्भपूजां च कारयेत् । दिग्देववीशशान्तचक्रभूतानां वा तेषां बिम्बाभावे देवेशस्यैव पञ्चाग्नीन् पौण्डरीकाग्निकुण्डानिवा कल्पयेदित्येके । बिम्बाभावेऽपि दिग्देववीशशान्तचक्रमहा-भूतानां पृथगेव होमं यत्नतः कुर्यादिति भृगुः ।

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे संभाराहरणं नाम द्विषष्टितमोऽध्यायः[1] ॥



## ॥ अथ त्रिषष्टितमोऽध्यायः ॥

भिन्नकाले औत्स-वादिप्रतिष्ठायाम्

पूर्वं प्रधाने कौतुकबिम्बे प्रतिष्ठापिते तत्पश्चादौत्सवार्चयोरेव प्रतिष्ठाचेत्सभ्यपौण्डरीकौ वा कृत्वा तदुक्तहोमं जुहुयात् । देव्योः श्रीभूम्योश्च पश्चात्प्रतिष्ठा चेत् यागशालामध्ये दक्षिणोत्तरयोः शय्यावेदिं प्राच्यां औपासनाग्निकुण्डं श्वभ्रं कृत्वा कुम्भौ संपूज्य तयोर्देव्यावावाह्य तदग्नौ हौत्रं प्रशंस्य देव्योर्मूर्तिमन्त्रेणैवावाहनजुष्टाकारहोमान्ते श्रीदैवत्यं श्रीसूक्तं च श्रीदेव्याः पञ्चभूमि-दैवत्यं महीसूक्तं च महीदेव्याश्च [2]प्रत्येकमेकविंशतिरावर्त्य वैष्णवान्तं हुत्वा [3]तन्मन्त्रेण तत्तत्स्थाने प्रतिष्ठापयेदिति विशेषः ।

स्नानश्वभ्रम्

अग्न्यालयाघारादिमन्त्रस्विष्टकृत्प्रभृत्यन्तहोमानां विधानं वैखानससूत्रेण विज्ञेयम् । आहवनीयादुत्तरपूर्वे स्नपनार्थमौपासन-कुण्डवच्छ्वभ्रं कुर्यात्[4] ।

1. ग. इति षडुत्तरशततमः खण्डः । 2. च. प्रत्येकं विंशतिः 3. च. तत्तन्मन्त्रेण
4. ग. इति सप्तोत्तरशततमः खण्डः

[1]अथाचार्याद्याः सर्वे पूर्वेद्युः स्नाताः कृतप्राणायामाः सायं सन्ध्यामुपास्य स्वकीयानग्नीन् हुत्वा कर्मारभेयुः। स्थापकाः शतं प्राणायामं कुर्युः। [2]गुरुर्यजमानं शिष्यं संकल्प्य द्विजाति "मणोरणीया" नित्यनुवाकेन प्रोक्ष्य शूद्रोऽनुलोमो वा कारयिता चेदमंत्रकमभ्युक्ष्य राजानं यजमानं [3]कल्पयेत्। तद्भृत्यत्वादनधिकाराच्छूद्रानुलोमयोः। तावुभौ च समग्रं फलं लभेताम्। सूतादिप्रतिलोमो यत्किञ्चिदपि दैविकं कर्म कर्तुं कारयितुं देवार्थं द्रव्यं दातुं च नार्हत्येव।

अहोरात्रप्रयोगः

सूतादीनां नाधिकारः

आचार्योऽध्वर्यूंस्तत्तद्धोमेषु [4]नियुञ्जीत। तस्यालयस्योत्तरे तथैव वास्तुहोमं हुत्वा विमानस्य गर्भगेहादि सर्वत्र पर्यग्निपञ्च[5]गव्योक्षणाभ्यां शोधयित्वा पुण्याहं वाचयेत्। अधिवासगतं देवेशमुद्धृत्य संस्नाप्य वस्त्राभरणगन्धमाल्यैरलंकृत्य यानमारोप्य ग्राममालयं वा सर्ववाद्यघोषयुतं प्रदक्षिणीकृत्य यागशालां प्रवेश्य स्थापयेत्। तत्काले मथितमग्निं निधाय तदलाभे श्रोत्रियागारादाहृतं वा सर्वहोमेष्वाज्येनाघारं जुहुयुः। पञ्चाग्नीनामाघारविशेषो वक्ष्यते। श्रीवैखानस[6]सूत्रोक्तौपासनाग्न्याघारविधिना सर्वं कृत्वा [7]गार्हपत्यं गार्हपत्ययज्ञदैवत्तं ओं भूः पुरुषमच्युतमिति गार्हपत्यस्य अन्वाहार्यमन्वाहार्ययज्ञदैवतं ओं भुवः पुरुषं सत्यमित्यन्वाहार्यस्य आहवनीयमाहवनीययज्ञदैवतं ओं सुवः पुरुषं पुरुषमित्याहवनीयस्य आवसथ्यं आवसथ्ययज्ञदैवतं ओं महः पुरुषमनिरुद्धमित्यावसथ्यस्य सभ्यं सभ्ययज्ञदैवतं ओं जनः पुरुषं विष्णुमिति सभ्यस्य इत्येवमावाहनजुष्टाकारस्वाहाकारैर्विशेषमाघारं विभज्य पञ्चस्वग्निषु पञ्चधैव जुहुयात्। "पञ्चधाग्नीन् व्यक्रामत् विराट्सृ"ष्टेति श्रुतेः। पौण्डरीकाग्नेराघारक्रमेणैवाघारं जुहुयात्। एतस्याघारं भगवान् ऋषिः सूत्रे [8]वैखानसेऽवोचत्। पूर्ववदौपासनवत्सर्वं कृत्वा पौण्डरीकं पौण्डरीकयज्ञदैवतं ओं तपः पुरुषं [9]वासुदेवं सत्यं पुरुषं नारायणमितिपौण्डरीकस्य आवाहनाद्याघारान्तं जुहुयादित्यत्रिः। सभ्यादिषु

पञ्चाग्निष्वाघार.

पौण्डरीकाघारः

1 ट. कोशमात्रे 2. क. गुरुरध्वर्यून् 3. च संकल्पयेत् 4. च. नियुञ्जीयात् 5. च. गव्यप्रोक्षणाभ्यां 6. च. सूत्रोक्तविधिना 7. क. अत्र सर्वत्र प्रथमोपात्तं द्वितीयान्तमग्निनाम ट भिन्नकोशेषु न दृश्यते। 8. च. वैखानस 9. वासुदेवमिति पौण्डरीकस्य श्रामणकं श्रामणकयज्ञदैवतं ओं सत्यं पुरुष नारायणमिति क. कोशे पाठः अत आवाहनादीति ग्रन्थः

[1]षट्सु च देवं ध्यायन् आज्यमुपजुह्वाऽदाय वैष्णवं हुत्वा चरुं दर्व्याभिघार्यादाय जुह्वा च वैष्णवं यजेत् । अन्येषु [2]स्रुवेणाज्यं जुहुयात् ।

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे सर्वाग्न्याघारविधिर्नाम [3]त्रिषष्टितमोऽध्यायः ॥



## ॥ अथ चतुष्षष्टितमोऽध्यायः ॥

कुम्भपूजाविधिः

द्वात्रिंशत्प्रस्थसंपूर्णं पक्वालर्कफलाकारं खण्डस्फुटितकालरहितं कुम्भं संगृह्य 'इन्द्रं प्रणवन्तं, स्वस्तिदा विशस्प' ति रिति तन्तुना यवान्तरमावेष्ट्य 'शुची वो हव्या' इति प्रक्षाल्य दिवैव नद्यां जलं 'धारा'स्वित्यादाय वस्त्रेणोत्पूय 'इदमापश्शिवा' इत्यभिमृश्य सर्वगन्धयुतेन तज्जलेन 'विश्वतश्चक्षुः—नमस्सुलो'मीति कुम्भमापूर्याहताभ्यां दुकूलाभ्यामन्यच्छेत्तवस्त्राभ्यां कुम्भस्य कण्ठमावेष्ट्य अतो देवादिना कूर्चकुशपुष्पगन्धाक्षताश्वत्थपल्लवानि निक्षिप्य 'इयं जागृति' रित्यभिमृश्य सौवर्णान्यष्टमङ्गलपञ्चायुधानि स्रुक्स्रुवकमण्डलुजुहूपजुहूछत्रचामरांकुशध्वजतुलातोदयुगलाङ्गलादीनि [4]वर्णचिन्हानि सर्वाणि द्व्यंगुलमात्राणि [5]चातुर्वर्ण्याभिवृद्ध्यर्थं तत्कुंभे विष्णुसूक्तेन प्रक्षिप्य देवस्याभिमुखे धान्यराशौ तत्कुम्भं संन्यस्य ध्यानमारभेत् ।

ध्यानप्रकारः

[6]उदङ्मुखः समासीनो गुरुरात्मसूक्तं जप्त्वा हृदये प्रणवं बीजाक्षरं च सन्न्यस्य कुम्भजले वारुणमण्डलं ध्यात्वा तन्मध्ये [7]परमं सर्वकारणं ब्रह्ममयं सुवर्णाभमादिबीजं संन्यस्य प्रणवैरावेष्ट्य प्रत्यगात्मवित् ध्यानयुक्तो निर्गुणं निष्कलं सर्वव्यापिनं परमात्मानं हृदये ध्यात्वा तस्मात्तत्कुम्भजले समावाह्य सुवर्णवर्णं रक्तास्यनेत्रपाणिपादं [8]पीताम्बरं किरीटहारकेयूरप्रलम्बयज्ञोपवीतिनं शंखचक्रधरं चतुर्भुजं श्रीवत्सांकं प्रणवात्मकं भक्त्या सकलं ध्यात्वा संकल्पयेत् । विश्वव्यापिनस्तस्यावाहनं विश्वस्मादेकत्र स्मरणमिति केचित् । सूर्यमण्डलादित्यपरे । देव्यौ स्यातां चेत् देवेशेन सह तत्कुम्भे समावाह्य तत्तद्रूपं तथैव च ध्यायेत् ।

1. षट्सुश्रामणकेचेति तत्र क. कोशे पाठः 2. स्रुवेणैव 3. ग. इत्यष्टोत्तरशततमः खण्डः 4. च. चिन्हादि 5. चातुर्वर्ण्यहितार्थं 6. च. उदङ्मुखं 7. वरुणं 8. पीताम्बरधरं

प्रतिष्ठाविशेषे

तरुणालयेऽर्च्यमानं बिम्बमानीय मूलालये प्रतिष्ठाचेत् देवस्य विशेषपूजां कृत्वा अभिमुखे कुम्भपूजनमेवं कृत्वा तद्बिम्बाद्देवमावाहयेत् । तदर्चितं बिम्बं ध्रुवबेरस्यानुरूपं लक्षणयुक्तं [1]दोषहीनं चेत्तदेव मूलालये प्रतिष्ठापयेत् । नानुरूपं लक्षणहीनं खण्डस्फुटितादिदोषैर्युक्तं दारूपलकृतं च यद्भवति तत् त्यक्त्वान्यदादाय प्रतिष्ठापयेत् । नानुरूपमपि लक्षणयुतं दोषविहीनं लौकिकं तत्कौतुकोत्सवार्चाबिम्बानां स्थानादन्यत्र तदालये प्रतिष्ठाप्य यथालाभमर्चयेत् ।

अदुष्टबिम्बस्य न त्यागः

पूर्वार्चितं बिम्बं दोषविहीनं यस्त्यजेत् पापीयान् भवति । प्रथमे तरुणालये सद्यः अर्चितुमिच्छन् अलब्धे यथोक्ते कौतुके बिम्बे यथोक्तं तद्यावत्पुनः लभेत तदा ध्रुवबेरस्योक्तवृक्षैरश्वत्थेन वा यथालाभमानेन कृतं बिम्बं प्रतिष्ठाप्यार्चयति । परिवारदेवानां च तत्तद्बिम्बं सन्न्यस्य तत्तद्रूपाणि यथोक्तं ध्यात्वाऽऽवाहयेत् ।

कलशस्नापनम्

देवेशं देव्यौ कुम्भं च सर्ववाद्यघोषयुतं समानीय बिम्बं श्वभ्रे तद्दक्षिणे कुम्भं च सन्न्यस्य व्रीहिभिस्तंडुलैर्वा पुरतो दण्डवत्पङ्क्तिं कृत्वा क्षीरघृतमधुसिद्धार्थोदकाक्षतोदक [2]गन्धोदककुशोदकैः पूर्णान् कलशान् पार्श्वे तदुपस्नानांश्च उदकपूर्णकलशानुत्तरादि च संन्यस्याभ्यर्च्य 'शन्नो देवीः अग्न आयाहि अग्निमीळे पूतस्तस्य इमा ओषधयः अभित्वाशूर चत्वारि वा'गित्युक्त्वा क्रमेण तैः सप्तभिः कलशैः तदुपस्नानैः 'वारीश्चतस्र' इति देवेशं [3]संस्नाप्य तत्तद्द्रव्यैः कुम्भं च प्रोक्ष्य शुद्धोदकेन देवं पुनः संस्नाप्य [4]प्लोतवस्त्रेण विमृज्य वस्त्रोत्तरीयाभरणगन्धमाल्यैरलंकृत्य पाद्याद्यैरर्चयेत् । औत्सवादिबहुबेरैः सह प्रतिष्ठा चेत्स्नपनं पृथगेव विधीयते ।

भिन्ने गर्भगेहे

भिन्ने गर्भालये [5]तदलाभे च कुंभपूजनस्नपनशयनानि यथोक्तहोमं च पृथगेव कुर्यात् ।

शयनास्तरणम्

सर्वालंकारयुते शयनस्थाने धान्यराशिं कृत्वा बैल्वफलकां न्यस्य तदूर्ध्वे च अण्डजं पक्षिपिंछकृतं मुण्डजं कार्पासकृतमाविकादि मृगरोमकृतं

---

1. दोषहीनं चेदित्यारभ्य नानुरूपमपि लक्षणयुतमित्यन्तं च कोशे न दृश्यते 2. च. कुशोदकगन्धोदकैः 3. देवेशं सस्नाप्य 4. च. प्लोतेन वस्त्रेण ग. प्लोतेन नववस्त्रेण 5. च. तद्भेदेच.

[1]रोमजं सिंहव्याघ्रादिचर्मकृतं चर्मजं कौशेयकृतं वामजम् । एतान्युपर्युपरि क्रमेण शयनान्यास्तरेत् । तदलाभे पञ्चवस्त्राणि वा शिरः पादयोरुपधानं च कृत्वा शयनमभ्युक्ष्य पुष्पाण्यवकीर्य विष्णुसूक्तेन देवेशं कुम्भमप्यादाय तच्छयने समारोप्याभिमुखे तण्डुलेषु सुवर्णसूत्रं [2]तदलाभे कुतपादितंतु सन्न्यस्य पुण्याहं कृत्वा तत्सूत्रं 'कृणुष्व पाज' इत्यनुवाकेनाभिमृश्य स्वस्तिसूक्तेनादाय हस्ताभ्यां[3] 'स्वस्तिदा विशस्पति'रिति देवस्य दक्षिणहस्ते देव्योस्तत्तन्मन्त्रेण वामे प्रतिसरं बध्वा [4]यद्दिग्विमानद्वारं तद्दिङ्मौलिं यथा शयने कौतुकबिम्बं यद्वैष्णवमिति शाययित्वा [5]देव्यौ च तत्तन्मन्त्रेण सह पार्श्वयोः शाययेत् । तदेकशयनवेद्यां पृथगेव शयनान्यास्तीर्य अर्चामौत्सवं च प्रतिसरं बध्वा तथैव शाययेत् । उत्तराच्छादनवस्त्रेण कण्ठादधः प्रच्छाद्य देवपार्श्वे [6]रत्नादीनि संन्यस्य अधिवासयेत् । ऋग्वेदादि [7]चतुर्वेदानां प्रागादिचतुर्दिक्षु अध्ययनं कुर्यात् ।

प्रतिसरबन्धः

शयनम्

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे कुम्भसंग्रहणादिशय्याधिवासान्तविधिर्नाम [8]चतुष्षष्टितमोऽध्यायः ॥

## ॥ अथ पञ्चषष्टितमोऽध्यायः ॥

अथ प्रधानाग्नौ हौत्रप्रशंसनम् । वस्त्राभरणाङ्गुलीयैः अलङ्कृतः होता पादौ प्रक्षाल्याचम्य देवेशं प्रणम्य सभ्यात्प्राच्यां पश्चिमाभिमुखः तिष्ठेत् । तं सभ्याध्वर्युः 'होतरे'हीति वदेत् । स होताध्वर्यु 'मध्वर्यो देवता' इत्युक्त्वा पादौ प्रक्षाल्याचम्य पूर्ववत् स्थित्वा 'ओं नमः प्रवक्त्रे' इत्युक्त्वाऽन्ते होता स्वनाम'शर्माण'मिति संयोज्य 'भूते भविष्य'तीति च हिं कारपूर्वं 'भूर्भुवस्सुवरो'मिति प्राङ्मुखः 'प्रवो वाजा' इति वदेत् । सोऽध्वर्युस्तदुक्तमोंकारं श्रुत्वा पलाशसमिधः अग्नौ क्षिपेत् । स होता 'अग्न महां अ'सीत्यन्ते यजमानगोत्रनाम संयोज्यान्ते 'देवेद्धो मन्विद्ध' इत्याद्युक्त्वा देवेशं पञ्चमूर्तिनामभिरावाह्य परिवारार्चनोक्तानुक्रमेण श्रीभूम्योः

हौत्रशंसनम्

1. रोमजं चर्मजं वामजमिति त्रीणिपदानि पृथक् पृथक् लक्षणवाक्यानि निविष्टानि दृश्यन्ते च कोशे 2. च. कुतपादिसूत्रं वा 3. च. कोशे न दृश्यते 4. च. यतो द्वारं ततो मौलिं तथा शयने 5. ABM. देव्योश्च 6. छ. रत्नादि 7. AB. चतुर्विधानां 8. च. इति नवोत्तरशततमः खण्डः

मार्कण्डेयादीन् पाकोर्जुनान्तान् परिषद्देवानपि मूर्तिमन्त्रैरावाहयेत् । अध्वर्युरपि देवेशादिशर्वान्तान् दक्षिणप्रणिधौ धात्रादिभूतान्तानुत्तरप्रणिधौ तथावाह्य आवाहन-क्रमेण जुष्टाकारं कृत्वा मूर्तिमन्त्रैस्तथैवाहुतीर्यजेत् । देवं ध्यायन् वैष्णवं [1]हुत्वा पञ्चवारुणं जयानभ्यातानान् राष्ट्रभृतो यद्देवादींश्च जुहुयात् ।

सर्वदेवार्चनम्

यागशालायां परितः सर्वान् देवानेतानर्चयेयुः । शंकर बलिरक्षक सरस्वती रवि[2] शक्राग्नि पवित्र शौल्पान् प्राच्यां प्रत्यङ्मुखान् भौम गुह दुर्गा [3] यम मन्द सप्तरोहिणी सप्तमातृ रुत्तरमुखान् दक्षिणस्यां निर्ऋति महाकाली विष्णु वरुण बुध ज्येष्ठा पुष्परक्षक वायून् [4] प्राङ्मुखान् पश्चिमस्यां शुक्रं भृग्वादि सप्तर्षीन् गंगा कुबेर चन्द्र महाभूते[5]शान् दक्षिणाभि-मुखानुत्तरस्यां द्वारेषु द्वारपालान् विमाने न्यक्षादीनभिमुखे श्रीभूत गरुड चक्र ध्वज शंख महाभूतान् [6]सप्तविंशतिविग्रहैः त्रयोदशैर्वार्चयेयुः ।

सहस्राहुतिः

[7]ततः सभ्याग्निं परिषिच्य अग्नौ 'स्वस्ति चैवेह प्रजापतये अग्निर्धीमतय आदित्येभ्यो विश्वेभ्यो देवेभ्यो मरुद्गणेभ्यो भूरग्नये भुवो वायवे सुवरादित्याय भूर्भुवस्सुव'रिति दशकैः शतशो जुहुयादेषा सहस्राहुतिः ।

पारमात्मिक-कल्पः

पौण्डरीके [8] शतं पद्मं [9] आहृत्य कपिलाघृते समाप्लुत्य विष्णुगायत्र्या प्रत्येकं हुत्वा पद्मालाभे बिल्वपत्रेण वा आज्येन 'विष्णुः सर्वेषां सुसूक्ष्मः ज्योतिर्वा पारमात्मिकं ईशो यस्मात् रायामीशो यो ब्रह्मशब्दो यो वा त्रिमूर्तिर्यद्वा कृतं कं कोशं यं यज्ञैः—यो वा गविष्ठो यो वा वायुः त्वमग्नेत्रिगुणः त्वं जीवस्त्वं भूमेर्वितन्वन् मनस्त्वं भूत्वा त्वं बुद्धिर्भूतानां यः सूक्ष्मान् यस्य वा भयात् [10]यन्त्वां सर्वं यस्त्वं भूत्वा कामो भूत्वा अंगादङ्गात् योमोहयन् यो [11] द्वादशात्मा यो ब्रह्मा ब्रह्मविदां सारस्वतो वा यो वा परं ज्योतिः यो दोषो यस्यैताः—वाको वा द्वावेतौ [12] द्वौ वा आयुः यो वा तेजः [13] सा संपायान् यो वा

---

1. च. त्रिभिर्हुत्वा 2. च. रविचक्रदि ? 3. च. यमुना 4. म. प्राङ्मुखान् 5. वीशान् 6. ट. सप्तविंशतित्रयोदशविग्रहैर्वा 7. ट. तस्याग्निं परिषिच्य 8. ट. म. शतान् पद्मान् 9. च. व्याहृत्या कपिलाघृतैः 10. ट. A. यन्त्वं 11. योवाद्दशात्मा भाष्यपाठः 12. यो वा आयुः भाष्य पाठः 13. सहसंपायत् भाष्यपाठः

संयोगः सहस्रं वा स्वातिगा गुप्तयः सत्यं वा सत्यो ज्योतिः—सत्यं पुण्यं सत्योद्योगः [1] कामीमिमां आरिणीं वा तत्सत्त्वोवा विष्णुः तद्भूर्भुवस्थमापो वा आपः त्रयी वा कामं द्वौ वा मुख्यौ स एकैक स्साधारः—स्वयमादि [2] र्यस्त्वयं सृष्टं स्वौजसा सर्वं क्ष्मामेकां यः कुंधरमाणो यो वा पृथां [3] यां गामुशन्तीं प्रजापते न त्वत् योधूर्धुरं यो वा व्यहिंसीत्—तपोनिधिं यो वा नृसिंहो रयिः ककुद्मान् राकामहं वेदाहमेतं [4] दिग्दोषा यस्य [5] पद्मास्य वक्षो यः पुण्डरीको रयीणां पतिं रायां पतत्रे—यत्सारभूतं फलो वा एष धूर्णो वहन्तां विश्वं बिभर्षि सो वा स्वरूपो भूर्भुवो वा दाक्षायण्या माशास्समस्ताः यो जंगमानां यो वा दशानां—चत्वारो दोषाः वक्षोवसत्यस्य अणोरणीयान् विष्णुर्वरिष्ठः [6] अब्जो जुषन्तो मामात्मगुप्तां यं चिन्तयन्तः पुण्यां च पुण्यः सो नो भूतः सत्त्वैव नित्यं—या गा वरिष्ठा [7] वाय्वन्तरात्मा सर्वोपरिष्टात् तमः सर्वभूतं ज्योति र्ज्योतिषां सत्त्वं सत्त्वात्मकं अनिर्भिण्णं यस्येच्छा यो वेदादिः यो वा व्यक्तं—यो वा भूतेः सत्यस्सत्यस्थः ऋतं सत्यमंराजिमन्तं मामात्मगुप्ता'मिति पारमात्मिकं देवेशं ध्यायन् जुहुयात् ।

आहवनीये पुरुषसूक्तं अन्वाहार्ये विष्णुसूक्तं ब्राह्मं च व्याहृत्यन्तं गार्हपत्ये वैष्णवं आवसत्थ्ये वैष्णवं रुद्रसूक्तं च । आहवनीयादिषु चतुरग्निषु एवं प्रत्येकं [8] षोडशकृत्वो हुत्वा सकृज्जयादींश्च जुहुयात । इन्द्रादीनां होमेषु तत्तन्मन्त्रानेकविंशतिकृत्वो वीशशैषिकयोर्मन्त्रान् [9] अष्टोत्तरशतं सकृदेषां [10] मूर्तिमन्त्रैश्च जुहुयात् ॥ होमान्तराणि

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे हौत्रपशंसनप्रधानहोमविधिर्नाम [11] पञ्चषष्टितमोध्यायः ॥

## ॥ अथ षट्षष्टितमोऽध्यायः ॥

अथ देवेशं प्रणम्य सभ्याग्नौ [12] परिषदां होमं जुहुयात् । चिरायुषं पुण्यौघनिष्ठायेति मार्कण्डेयं [[13] पद्मापिले भृगव इति भृगवे] सर्वदैवत्यहोमः

1. कामीमुर्मां भाष्यपाठः 2. यः स्वयं सृष्टं भाष्यपाठ. 3. च यां गमुशन्ती 4. च. दिग्द्रोषोयस्य 5. पद्मास्य वक्षाः भाष्यपाठः 6. ट. अर्जोजुषन्तः 7. वायुरन्तरात्मा दीक्षितीय पाठः 8. च. षोडशशोहुत्वा 9. च. शताष्टकं 10. च. एतेषां 11. ग. इति दशोत्तरशततमः खण्डः 12. च. पार्षदां A. परिषदां सर्वदेवानां 13. चिन्हितो भागः क कोश एव दृश्यते नान्यत्र:

'ब्रह्मजज्ञानं हिरण्यगर्भ' इति ब्राह्मं ब्रह्मणे 'रुद्रमन्यं त्र्यम्बक'मिति रुद्राय 'द्यावापृथिव्यो'रिति धात्रे 'यस्याः श्रियो'वेति विधात्रे लक्ष्म्यै 'धृत्या' इति [1] भूतये य एष बिभ्रतीति पतंगाय 'वितत्यविश्व'मिति पतिराय 'यो नोऽभिरक्ष'तीति वरुणाय 'मुनीन्द्रब्र'ह्मेति मणिकाय 'सन्ध्यायै' इति सन्ध्यायै 'वैखानसा'येति वैखानसाय 'तापसा'येति तापसाय 'किष्किन्धा'येति किष्किन्धाय'तीर्था'येति तीर्थाय 'त्रातार'मित्यायैन्द्रमिन्द्राय 'अग्निर्मूर्धा अयम'ग्नि-रित्यग्नये '[2]यमो दाधा'रेत्यादि याम्यं यमाय 'वसवः प्रथमः सहस्राक्ष' इति निर्ऋतये 'ये ते शत'मित्यादि वारुणं वरुणाय 'मरुतः परमात्मा मरुतो गणाना'मिति वायवे '[3]मिश्रवाससः एतान्धनैता'निति कुबेराय 'ईशानस्सर्वलोकानामीश [4]ईशत' इतीशानाय 'उदुत्यं चित्र'मित्यादित्याय'ममाग्ने वर्चोऽहमग्नेऽग्नि रग्न आयाही'ति त्रीन् भौमाय 'प्रभुर्देवो गृहाऽधिपति'रिति शनैश्चराय '[5]बृहस्पति-र्देवानां बृहस्पतिस्सोमो बृहस्पते अति यत उपमायागृहीत' इति बृहस्पतये '[6]श्रविष्ठजो यः तद्विष्णोः परमं पदं तद्विप्रास' इति बुधाय 'प्रजापते न त्वन सुभूस्स्वयंभू'रिति शुक्राय 'भू भामिनीष्टगामि'नीति गंगायै 'सोम यास्ते याते धामानी'ति चन्द्राय '[7]रुद्रमन्यं त्र्यम्बक'मिति रुद्राय जगद्भुवं जगद्भवोऽभिपतिः सुब्रह्मण्यो बृहस्पतेः सुब्रह्मण्यो रुद्रभुवो जगद्भुवः सुब्रह्मण्यो जगद्भुवो योयजद्भुव' इति सुब्रह्मण्याय 'अतो देवा इदं विष्णु'रिति पुरुषाय 'या ब्रह्मचारिणी [8]साचारुजन्म'नीति महाकाल्यै 'एषामराणां याम्या'नीति ज्येष्ठायै 'जातवेदस' इत्यादि दुर्गायै 'नन्दिन्याभूल आपो विवे'शेति नन्दिन्यै 'शाखाभूत देवी [9]प्रवाहि'णीति ग्रन्थिन्यै 'बिसिनी भूता प्रविद्युताया' इति [10]कृच्छिण्यै 'गंगावाणी विद्यां नोमा'स्त्विति [11]कुण्ठिन्यै 'माता ह्यमेया आयामहं' त्वे'ति विकारिण्यै 'यया सतस्सत्यं प्रसविण्यंग' इति दद्रुण्यै 'याभ्यो हि [12]ततं या मानसा वे'तीन्द्रियविकारिण्यै 'यतस्स्वमा सीदसा अस्मा' दिति ध्रुवाय 'कस्मादिति

1. भूतय इत्यत्र भुवंगः प्रकृतः 2. क. यमोदाधार ननस्ते निर्ऋतय इति निर्ऋतये 3. क. मिश्रवासस इत्यादिकौबेरं कुबेराय 4. ईशित्रे भाष्य पाठः 5. ञ. बृहस्पतिर्देवेत्यादि बार्हस्पत्यं बृहस्पतये 6. श्रविष्ठजायः भाष्यपाठः 7. च. रुद्रमन्यमित्यादि रुद्राय 8. साचारुजन्मा भाष्य पाठः 9. प्रवाहिनीति प्रायशः पाठः 10. ट. कृच्छ्रौ 11. म.कुष्ठिन्यै 12. क. कोशे दृश्यते 13. व्यावर्तते भाष्यपाठः

अभूद्विस्मापय'तीत्यंगिरसे 'व्यावर्धते—सस्मार साग्र' इति पुलहाय 'य एषो दानः—आनन्दरो दैत्य 'इति पुलस्त्याय 'प्रप्रायशो—[1] ये निष्यन्दा' इति 'क्रतवे 'यो नो वसिष्ठः—सप्तोत्तमाय 'इति वसिष्ठाय 'य आनसूयेशो—य एष दिग्भ्य' इत्यत्रये 'स एको भूत्[2]—यस्त्रैष्टुभ'श्चेत्याकाशाय 'प्रकम्य—यो मातरिश्वे'ति वायवे 'वृषाकपेः—ओजोभिमा'नीत्यग्नये 'आपो विश्वं—चातुर्य'मिति तोयाय 'तयादित्या तत्त्रीण्ये'षेति हरिण्यै 'पावकानो—महो अर्ण' इति सरस्वत्यै '[3]शंसानि—भूयाम' इति श्रियै 'य उत्तमोऽग्नेः पथा य'मिति न्यक्षाय 'यमर्पयन्ति—यस्संहरती'ति विवस्वते 'ऋचामधीशो—नीतां धृति'मिति मित्राय '[4]येनेष्टे—समूह्यतेवे' ति महीधराय 'चरुं पचेत्—छुलुयां'मिति हवीरक्षकाय 'चतुर्मुखी-यालो'केति ब्रह्माण्यै 'त्रिणेत्रधारी—चिह्नं च रौद्र'मिति रुद्राण्यै 'ज्वालामाला—[5]बालान् ह'रीति षण्मुख्यै 'युगे युगे—सर्वं र'मेति वैष्णव्यै 'कल्पेषु कल्पेष्वन्तेष्वि'ति वाराह्यै 'सा सर्वदेवेषु—मालाधरी'येतीन्द्राण्यै चण्डी हरी—मोही विमो'हीति काल्यै 'धाता—स्य—फुल्लानर्ही'ति पुष्परक्षकाय [6]विश्वान् वले—[7]सौ'रेति बलिरक्षकाय 'आग्नेयः [8]प्रेक्षाम' इति विष्वक्सेनाय 'शतधारं—कदापि सृजत' इति गरुडाय '[9]धर्मोघमादौ-योगं धरन्त्वि'ति विघ्नाय 'यमर्पयन्ति शन्नो निधत्ता'मिति नागराजाय 'भूमाननोग्रे—[10]वन्ध्योन' इति सुदर्शनाय 'आसाग्र—ओजो बला'येति ध्वजाय 'तन्मायशोऽग्रे—अस्मादुपास्य'इति पांचजन्याय 'भूतानां—भूतो भूते'ष्विति महाभूताय 'अक्षहन्ते—ये भूता' इति पार्कोर्जुनाय च ।

एतेभ्यः परिषद्देवेभ्यो हुत्वा देवेशाय वैष्णवं [11] त्रिर्हुत्वा विष्णुसूक्तमिन्द्राहुत्याश्राविदीन् जुहुयात् ।

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे सर्वदैवत्यविधानं

**नाम षट्षष्टितमोऽध्यायः** [12]

---

1. ये निष्यन्ताः भाष्यपाठः. 2. यस्त्रिष्टुभश्च भाष्यापाठः ट. यस्त्रैष्टुभस्य 3. शंसानि यच्छदति क कोशमात्रे. 4. येनेष्टे भाष्यपाठः. 5. बालाहरीत्येव प्रायशः पाठः 6. विश्वान् बलिरक्षितत्यादि भाष्याहृतः पाठः 7. म. सौचोहृत. 8. प्रैषाम इति भाष्ययपाठः. 9. धर्मौघमिति भाष्यपाठः. 10. वन्द्यो न इति भाष्यपाठः 11. च. त्रिभिः 12. भ. इत्येकादशोत्तरशततमः खण्डः

## ॥ अथ सप्तषष्टितमोऽध्यायः ॥

रात्रौ होमान् [1]समाप्य प्रभाते [2]यजमानेन स्थापकाद्यैश्च युक्तो गुरुर्विधिना कृतस्नानो देवालयं प्रविश्य देवेशं प्रणम्य अधिवासितरत्नादीन्यादाय गर्भालयं प्रविश्य ब्रह्मपदमध्ये चतुरङ्गुलविस्तारोन्नताभिः वेदिभिः तिसृभिः सहितं तालोन्नतं चतुरश्रं भुवंगसमं पद्माकारं वृत्तं वा कौतुकस्यार्चापीठं कृत्वा तन्मध्ये [3]भागावगाढविस्तारयुतं श्वभ्रं कृत्वा गोमयेनोपलिप्य पञ्चगव्यैः प्रोक्ष्य श्वभ्रे पञ्चविंशतिपदं परिकल्प्य रत्नादीनभ्यर्च्य 'तमेकने'मिमित्यभिमृश्य मध्ये पदे तेनैव गजं 'ब्रह्मा देवाना'मिति ब्रह्ममणिं च प्रतिष्ठाप्य शूलस्थापनोक्तवत् 'इन्द्रं प्रणवन्त'मित्याद्यैः वज्रादीनैन्द्रादिषु [4]तत्तद्दिगन्तरेषु 'शन्नो निधत्ता'मित्याद्यैरमृताश्मकादीनिच रत्नानि सन्न्यस्य पश्चात्तथैव 'ब्रह्मा देवाना'मित्याद्यैः मध्यादिषु सौवर्णगैरिकादीन् धातूंश्च ततो बीजानि च तथैव सन्न्यस्य इन्द्रादिषु श्रीवत्साद्यष्टमङ्गलानि दक्षिणवामयोः पञ्चायुधान् तत्तन्मन्त्रैः पूर्ववत्प्रतिष्ठाप्य [5] 'ब्रह्म प्रति'ष्ठेति वर्णचिन्हानि 'ये ते शत'मिति मेघ[6]विद्युल्लताश्च 'श्रिये जात' इति श्रीरूपं तेषामुपरि 'प्रजापतिं प्रथम'मिति कूर्मरूपं च संन्यस्य क्षौमेनाच्छाद्य सुधया परिलेपयेत् ।

रत्नन्यासः

औत्सवादीनामुक्ते स्थाने यथोचितं पीठं रत्नन्यासं विनैव कुर्यात् । सुवर्णशकलानि न्यसेदिति केचित् [7] ।

ततो देवेशं प्रणम्य प्रणवेन बोधयित्वा स्थापकैः सहितो गुरुः तं देवमुत्थाप्याभिवन्द्य [8]पूर्ववस्त्रादीनि विमोच्यान्यैर्नववस्त्रकक्ष्योत्तरीयाभरणैर्नवैः पुष्पमाल्यैर्गन्धैरलंकृत्य पाद्याद्यैरभिपूजयेत् । तत्काले यजमानोऽभिवन्द्य गुरुं स्थापकांश्च वस्त्रोत्तरीयाभरणादिभि[9]रलंकृत्य एतेभ्यश्चाध्वर्युप्रभृतिभ्यः सर्वेभ्यः श्रद्धाभक्तियुतो यत्नेन

देवोत्थापनम्

दक्षिणादानप्रकारः

1. B. समारोप्य 2. B. यजमानः स्थापकाद्यैश्च यथोक्तगुरुः विधिनैव स्नात्वा 3. च. भागावगाढं तालविस्तारयुतं 4. ट. तद्दिगन्तरेषु 5. च. ब्रह्म ब्रह्मेति वर्णचिह्नानि 6. च. छ. विद्युल्लतां 7. ग. इति द्वादशोत्तरशततमः खण्डः 8. च. पूर्ववत् 9. च. आभरणाद्यैः

सोदकं दक्षिणां दद्यात् । सुवर्णमेकविंशतिनिष्कं गुरवे स्थापकेभ्यः [1] प्रत्येकं पादाधिकं पञ्चनिष्कं सभ्याग्नेरध्वर्यवे होत्रे पौण्डरीकाग्नेरध्वर्यवे च [2] प्रत्येकमेकैकशः पञ्चनिष्कमाहवनीयादीनां चतुर्णामध्वर्युभ्यः प्रत्येकं त्रिनिष्कं [3] परिवारदेवानां अध्वर्यूणां अन्येषां च पृथक् पृथक् पादाधिकनिष्कमित्येवं [4] दक्षिणया सुपूर्णोयं यागः सफलो भवति । [5] अल्पदक्षिणो यागो यजमानस्य निष्फलो भवति ।

ततो मुहूर्ते समनुप्राप्ते सर्ववाद्यैः नृत्तैर्गेयैः छत्रैः पिंछैः चामरैः बर्हिणैरन्यैः सर्वालंकारैः [6] हृष्टजनैश्च परिवृतो गुरुः तत्कुम्भमुद्धृत्य शिरसा धारयन् पूर्वतो गच्छेत् । स्थापकाश्च हस्ताभ्यां देवमुद्धृत्य शकुनसूक्तं जपन्तोऽनुगच्छेयुः । पूर्वतो जलधारां कारयित्वा शनैरालयं प्रदक्षिणीकृत्य गर्भालयं प्रविश्यार्चापीठे जितेन्द्रिया ध्यानयुक्ताः स्थापकाः 'प्रतद्विष्णु'रिति कौतुकबिम्बं भक्त्या प्रतिष्ठाप्य तद्दक्षिणे श्रियमर्चां च कौतुकपूर्वं किञ्चिद्दक्षिणाश्रितेऽ[7]र्चास्थापनमित्येके । वामे हरिणीमौत्सवं च तत्तन्मन्त्रेण स्थापयित्वा देवेशस्य [8] पादं स्पृशन्तो विष्णुसूक्तं पुरुषसूक्तं वैष्णवं च जपेयुः ॥

आलयप्रवेशप्रकारः

प्रतिष्ठापनम्

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे कौतुकस्थापनविधिर्नाम

[9] सप्तषष्टितमोऽध्यायः ॥

---

## ॥ अथाष्टषष्टितमोऽध्यायः ॥

पीठस्य दक्षिणपार्श्वे तिष्ठन् अतो देवादिना तत्कुम्भं सन्न्यस्य गुरुरात्मसूक्तं जप्त्वा ध्रुवबेरस्य पादं स्पृष्ट्वा ध्रुवसूक्तं जप्त्वा तद्बेरस्य पादमध्ये यकारं मूर्धोदरपादेषु क्रमेण 'सुवर्भुवर्भू'रिति च प्रणवं सन्न्यस्य हृदये [10] सर्वदेवमयं सर्वकारणं सुवर्णवर्णमादिबीजं संन्यस्य तं प्रणवैरावेष्ट्य एकाक्षरादिना कुम्भस्थजलं तच्छक्तियुतं कूर्चेनादाय भक्त्या भगवन्तं ध्यायन् 'इदं

न्यासप्रकारः

---

1. छ. एकं दशनिष्कं 2. च. एकैकं पञ्चनिष्कं 3. म. च. परिवारदेवहोमानां 4. च. दक्षिणापूर्णोयं 5. ट. म. अदक्षिणः 6. ट. कोशे न दृश्यते 7. B. अर्चास्थानं च. अर्चास्थाने स्थापयेदित्येके. 8. B. पादौ 9. ग. इति त्रयोदशोत्तरशततमः खण्डः 10. च. सर्ववेदमयं.

आवाहनम् विष्णु[1]रायातु भगवा निति देवेशमयं तज्जलं 'विष्णुमावाहया'मीति ध्रुवबेरमूर्धनि स्रावयेत् । एवं तदचले प्रत्यगात्मानमविकार[2]मशेषविशेषं पञ्चमूर्तिनामभिरावाहयेत् । [3]अचले देवेशः तद्व्याप्य तिष्ठति । तथैव हि तत्सर्वं व्याप्य नारायणः स्थित इति श्रुतिः । बेरहृदये तद्बीजं सन्न्यस्य श्रियं हरिणीं च तत्तन्मन्त्रेणावाह्य दीपाद्दीपमिव ध्रुवबे[4]रादेव कौतुकबिम्बेऽर्चाया[5]मौत्सवे चावाहयेत् । यथा गार्हपत्यादाहवनीयादिष्वग्निं प्रणीय [6]जुहोति तथा ध्रुवबेरात्कौतुकबिम्बादिषु समावाह्यार्चयेत् ।

भित्तिपार्श्वे दक्षिणे ब्रह्माणं वामे रुद्रं यथोक्ते स्थाने भृगुं मार्कण्डेयमन्यपरिवारदेवांश्च बिम्बे तत्तद्बीजं संन्यस्य तत्तन्मन्त्रेणावाहयेत् । बिम्बाभावे यथोक्ते स्थाने पीठे बीजन्यासं विनैवावाहनं कृत्वा पादौ प्रक्षल्याचम्य गर्भालयं प्रविश्य

पुण्याहम् स्थापकाद्यैः सह पुण्याहं वाचयेत् । यथोचितैरुपचारैः नित्यार्चना-

नित्यार्चनारम्भः विधानेनाभ्यर्च्य, शुद्धौदन पायस कृसर गौल्य [7]यावकानि हवींषि

प्रतिष्ठान्तोत्सवः निवेद्य नैमित्तिकादिबल्यादीनि सर्वाणि कारयेत्[8] । प्रतिष्ठादिने साये ध्वजारोहणं कृत्वा नवाहं सप्ताहं पञ्चाहं त्र्यहं एकाहं वा संकल्प्य उत्सवोक्तक्रमेणोत्सवं कृत्वा तदवभृथान्ते स्नपनोक्तविधिना स्नपनं कारयेत् । उत्सवं कर्तुकामश्चेद्रात्रौ यथाशक्ति स्नपनं कारयेत् । अथवा शुद्धोदकस्नपनं वा ।

सुवर्णपशुभूम्यादिदक्षिणां गुरवे दद्यात् । तत्प्रतिष्ठायां उपयुक्तशयनोपधानानि

आचार्यसम्मानम् वस्त्राणि . कुम्भप्रक्षिप्तसुवर्णादीन्यन्यानि च द्रव्याण्युपयोगार्हाणि सर्वाणी गुरुरेव गृह्णीयात् । अन्यथा यजमानस्य सर्वं निष्फलं भवति । अनुपयोगद्रव्याणि सर्वाणि भूमौ खनित्वा पिदध्यात् । भक्तिश्रद्धायुक्तो देववद्गुरुमभिपूजयेत् । 'मास्म नास्तिको भू'दिति ब्राह्मणम् । [9]तस्मादनास्तिको भूयात् ।

एवं प्रतिष्ठाकर्मणि कृते यजमानस्य पूर्वजन्मस्विहजन्मनि च [10]मनोवाकाय-

फलश्रुतिः जातं पापं सर्वं तदह्नैव नश्यति ज्ञानयज्ञाद्यैः सद्यो ब्रह्मवर्चस्वी च

---

1. च. आयाहि 2. च. अविशेषविशेषं 3. च. अचल. 4. च. तथैवान्तर्बहिस्त त्सर्वमित्यादि 5. च. एवं तथा कौतुकबिम्बे 6. च. प्रणीयान्तहोमं जुहोति 7. A. B. यावकानि 8. ग. इति चतुर्दशोत्तरशततमः खण्डः 9. च. तस्मान्नास्तिको मा भूयात्. 10. ग. मनोवाक्कायकृतकर्मभिः B. कर्मणि.

भूयात् । प्रतिष्ठान्तप्रभृति [1] नित्यमहीनमविच्छिन्नं समग्रं चिरकालार्चनं यथा गच्छेत् तथा [2] दीर्घस्थितिमविरोधात्समवेक्ष्य नानाविधभूमिभोगानत्यन्तपुष्कलान् यत्नेन भगवत्पूजानार्थं तत्पूजकादीनामाचार्यादीनां नित्यदक्षिणार्थं च कल्पयित्वा [3] देवस्य परिच्छदांश्च दत्वा तथैव चिरकालं नित्यार्चनं कारयेत् । चिरकालार्चनेन [5] अभीष्टान् सर्वान् कामान् चिरमवाप्नोति । तथा भोगम् । अज्ञानादर्थलोभान्मोहाद्वा न कुर्याच्चेत् महादोषो भवेत् । देवार्थं कल्पितं सुवर्णपशुभूम्यादिसर्वमन्यत् द्रव्यं च 'विष्णोरिद'मिति सञ्चिन्त्याचार्यहस्ते अर्चकहस्ते वा जलेनैव दद्यात् । तत्सर्वं विष्णोर्दत्तमेव भवेत् । [5] येन यत्रैव पतेत्तस्य तत्पात्रमित्यहुः । नरके पतनत्राणात् सर्वपात्राणामुत्तमो हरिः। तस्मादेवं तदर्थं दानं तद्दातुः सर्वकामदमक्षय्यं वर्धयेज्जगतश्च हितं भवति । सर्वदेवमयस्य देवेशस्यार्चनं [7] सर्वशान्तिकरं वेदानां वैदिकानामप्यभिबृंहणम् । एतदेवं यत्नेनापि भक्त्या यः कुर्यात् स पुत्रदारक्षेत्रमित्रस्वकुलपशुभृत्यवाहनादिसमृद्धिं सुवर्णरत्नधान्यादिसर्वसंपदं व्याध्याद्यशुभनाशनं च लब्ध्वाऽभीष्टानि सर्वाणि सुखानि इह लोके चिरमनुभूय तदव्ययं शाश्वतं देवैरप्यनभिलक्ष्यं अतीन्द्रियं वैष्णवं [8] परमं पदं गच्छति । तस्यैकविंशति[9] पितरः पूर्वजाश्चैकविंशत्यपरजाताश्च विष्णुलोके महीयन्त इति ब्रह्मवादिनो वदन्ति ।

ग्रामादिषु तद्वास्तुनिवासिनः सर्वेऽप्येवमेव तत्फलं सर्वसंपदमशुभनाशनमग्निहोत्रफलं च चिरमनुभवन्ति ।

यत्नादप्येतत्परिपालनमुपर्यधिकविवर्धनं वा यः कुर्यात्सोऽपि प्रथमेष्टकादिसर्वकर्मफलं [10] लभेतेति विज्ञायते ॥

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे महाप्रतिष्ठाविधिर्नाम [11] अष्टषष्टितमोऽध्यायः ॥

---

1. A. नित्यमहिमाविच्छिन्नं 2. छ. दीर्घस्थितिविरोधान् समवेक्ष्य नानाविधविभूतिगोदानाद्यत्यन्तफलान्वित भगवत्पूजनार्थं A. नानाविधविभूतिगोदानाद्यनंतफलान्वितं म. दीर्घस्थित्यविरोधात् 3. क. भूमिखण्डं कल्पयित्वा 4. छ. देवदेवस्य 5. छ. अभीष्टान् कामान् सुचिरं कालमवाप्नोति 6. इतो वाक्यद्वयं A. कोशेष्वेव लभ्यते 7. ट. सर्वशान्तिकं 8. परममिति ट. कोशमात्रे 9. ट. एकविंशतिः 10. छ. लभेतेति 11. इति चतुर्दशोत्तरशततमः खण्डः ।

## ॥ अथैकोनसप्ततितमोऽध्यायः ॥

नित्यार्चनाविधिः

अथातो भगवतो [1]नित्यार्चनाविधिं व्याख्यास्यामः । यथोक्तमन्त्रैः स्नात्वाऽऽचम्य [2]अग्निमुपस्थाय देवानृषीन् पितॄन् तर्पयित्वा ब्रह्मयज्ञं कृत्वा द्वादशभिः सूक्तैश्चतुर्वेदादिमन्त्रैः स्वाध्यायं करोति । 'प्रतद्विष्णुः स्तवत' इति देवालयं प्रदक्षिणं करोति । 'मणिकं प्रपद्ये' इति मणिकं प्रणम्य यन्त्रिकां 'निरल'मित्यादाय 'हिरण्यपाणि'मिति कवाटे संयोज्य 'दिवं विवृणोतु [3]दिवः स्वर्ग'मिति कवाटोद्घाटनं करोति । ततोऽभ्यन्तरं प्रविश्य अतोदेवादिना देवस्य मुखमभिसमीक्ष्य 'शाम्यन्तु घोरा'णीति स्वपाणिना पाणिं त्रिः संप्रहार्य 'भगवतो बले' नेति देवं प्रणम्य दीपानुद्दीप्य शिष्यो 'दुहतां दिव'मिति घटमादाय नदीतटाककूपानां अलाभे पूर्वस्योत्तरमुपतिष्ठन । 'आद्यमभिगृह्णा' मीत्याधावं गृह्णाति । [4]ततो देवालयं प्रविश्य शिरःस्थमुदकुम्भं 'सोमं राजान'मिति न्यसेत् ।

अर्चको 'ब्रह्म ब्रह्मान्तरा'त्मेति हृदयमभिमृश्य द्यौर्द्यौर'सीति शिरोऽभिमृश्य 'शिख' इति शिखोद्वर्तनं सकृ'द्देवानामायुधै'रिति सर्वत्र [5]रक्षां कृत्वा 'सुदर्शन'मिति दक्षिणे हस्ते सुदर्शनं धारयति । 'रविपा'मिति वामे [6]शंखं च । 'सूर्यो'सीति दक्षिणे 'चन्द्रो'सीति वामे च चक्षुषोः न्यस्य हृदये बीजाक्षरं न्यस्य हस्तयोस्तलयोः दक्षिणवामयोः सूर्याचन्द्रमसोः मण्डलं न्यस्य 'आसुरण्यं विधिं यज्ञं ब्रह्माणं देवेन्द्र'मित्यङ्गुष्ठादि कनिष्ठान्तं न्यस्य 'अन्तरस्मिन्निम' इति ब्रह्माणं स्मरति ।

कुशैर्वस्त्रेण वा 'धारासु सप्त'स्वित्यपामुत्पवनं कृत्वा 'इदमापः शिवा' [7]इत्यपोऽभिमन्त्र्य 'अवधूत'मिति मार्जन्या [8]संमार्ज्य पांस्वादीन् परिहृत्य गोमयेनोपलिप्य 'आशासु सप्त'स्विति पञ्चगव्यैः प्रोक्ष्य 'नश्यन्ति जगता'मिति देवस्य निर्माल्यं [9]शोधयित्वा 'अहमेवेद'मिति पीठान्निर्माल्यमैन्द्रादीशानपर्यन्तमपोह्य 'पूतस्त'स्येति वेदिं [10]परिमृज्य '[11]नारायणाय विद्महे' इति पादपुष्पं

1. छ. नित्यपूजाविधिं 2. A. आदित्य 3. छ. मात्रे 4. ततं इत्यादि न्यसेदित्यन्तं वाक्यं ब्रह्माणं स्मरतीत्यन्तरं निविष्टं. छ. कोशे 5. कवचमिति छ. कोशपाठः 6. शंखं धारयति 7. छ. इत्यभिमन्त्र्य 8. छ. सम्मार्जयित्वा 9. शोधयित्वादि ईशानपर्यन्तमित्यन्तं छ. कोशे न दृश्यते 10. A. परिमृज्य प्रक्षाल्य 11. छ. तत्पुरुषायेति पादपुष्पं.

[1]पञ्चभिः मूर्तिभिर्दत्वा 'विष्वक्सेनं शान्तं हरममित' मिति देवस्य निर्माल्यहारिणं[2] [3]भगवच्छेषैः सर्वैरर्चयेदित्याचष्टे भृगुः ।

'भूः प्रपद्य' इति देवेशं नमस्कृत्य 'परं रंह' इति पीठादादाय 'प्रतद्विष्णुः स्तवत' इति स्नानपीठे देवं संयोज्य 'परिलिखित' मित्याम्लादिना संशोध्य 'वारीश्चतस्र' इति [4]संस्नाप्य 'नमो वरुणः शुद्ध' इति क्षीरेणाभिषिच्य 'भूरानिलय' इति गंधतोयैः पुनः संस्नाप्य ततः प्लोतेन विमृज्य 'भूरसि भूः प्रतिष्ठित्या' इत्यादिना जीवस्थाने प्रतिष्ठाप्य कुशाक्षतैः [5]सर्मं वारिभिः प्रणिधिं प्रणवेनापूर्य गायत्र्या ध्रुवस्थानं प्रोक्ष्य 'संयुक्तमेत'दिति ध्रुवकौतुकयोः संबन्धकूर्चं प्रक्षिपेत् । ध्रुवस्य पादयोर्मध्ये 'विष्णवे नम' इति प्राच्यां पुरुषाय सत्याय दक्षिणे प्रतीच्यामच्युतायानिरुद्धायोदीच्यां[6] आग्नेय्यां कपिलाय नैऋत्यां यज्ञाय वायव्यां नारायणायैशान्यां पुण्यायेति प्रथमावरणे द्वितीयावरणे वाराहाय नारसिंहाय वामनाय त्रिविक्रमायेति पूर्वादि प्रदक्षिणं चतुर्दिक्षु न्यस्य सुभद्रायेशितात्मने सर्वोद्वहाय सर्वविद्येश्वरायेत्याग्नेयादीशानपर्यन्तं न्यस्य तृतीयावरणे इन्द्राय यमाय वरुणाय कुबेरायाग्नये निरृतये वायव ईशानायेति स्वे स्वे देशे प्रणवादि नमोन्तं पुष्पन्यासं करोति । कर्मार्चास्थाने सुभद्राय हयात्मकाय रामदेवाय पुण्यदेवायेति पूर्वादि प्रदक्षिणं चतुर्दिक्षु न्यस्य सर्वाय सुखावहाय संवहाय सुवहायेत्याग्नेयादीशानपर्यन्तं न्यस्य शिवं विश्वं मित्रमत्रिं इति पीठान्ते पश्चिमादिबहिर्मुखानर्चयित्वा[7] सनत्कुमारं सनकं सनातनं सनन्दनमिति वायव्यादि कोणान्तेष्वर्चयित्वा [8]दक्षिणे मार्कण्डेयं वामे पाद्मापितरमित्यर्घ्यान्तं पूजयित्वा दक्षिणोत्तरयोः ब्रह्मेशानौ समभ्यर्च्य आत्मसूक्तं जपति[9] ।

स्नानासनम्

सम्बन्धकूर्चम्.

पुष्पन्यासः

पश्चात्सुवर्णवर्णं रक्तास्यं [10]रक्तनेत्रं सुखोद्वहं शुकपिञ्छांबरधरं विष्णुं प्रणवात्माकं किरीटकेयूरहार प्रलंबयज्ञोपवीतिनं श्रीवत्साङ्कं चतुर्भुजं

आवाहनम्

---

1. A. मात्रे एकत्र 2. छ. हारिभ्यां 3. छ. भगवच्छिष्टैः 4. छ. वारिणा संस्नाप्य 5. M. सह 6. M. उत्तरे 7. छ. अभ्यर्च्य 8. पुनर्लोकपालानपि तृतीयावरणे इत्यधिकं तत्र ग. कोशे 9. ग. इति पञ्चदशोत्तरशततम. खण्डः. 10. क. रक्तनेत्र पाणिनासं छ. रक्तास्यनेत्रं

शङ्खचक्रधरमेवं [1]परमात्मानं [2]सकलं ध्यात्वा मनसा प्रणिध्यां निवेश्य 'सुवर्भुवर्भू'रिति बिम्बस्य मूर्धनाभिपादेषु क्रमेण विन्यस्य यकारं पादयोरन्तरे पीठे न्यस्य हृदये बीजाक्षरं न्यस्य तं प्रणवैर्वेष्टयित्वा 'इदं विष्णुरायातु भगवा'नित्यूर्ध्वबाहुमुखः प्रणिधिमुद्धृत्य कूर्चेन तद्वारि बिम्बस्य मूर्ध्नि विष्णुमावाहयामीति संस्राव्य प्रागादि पुरुषं सत्यमच्युतमनिरुद्धमित्यावाह्य दक्षिणे श्रियं वामे हरिणीमित्यावाह्य 'प्रतद्विष्णु रस्त्वासन'मित्यासनं पृथक् पृथक् [3]पुष्पेण ददाति ।

'[4]विश्वाधिकानां जन'नेति स्वागतं 'मनोभिम'न्तेत्यनुमानं 'त्वं स्त्री'ति पाद्यमभिमृश्य 'त्रीणि पदेन्द्रोभिमन्ते'ति पाद्यं कूर्चेन वारि पादयोः [5]स्राव्य 'शन्नो देवी'रिति विष्णवे 'आपो हि'ष्ठेति पुरुषाय 'योगे योग' इति सत्याय 'समाने वृक्ष' इत्यच्युताय 'पवित्रं त' इत्यनिरुद्धाय आचमनं दक्षिणे हस्ते कूर्चेन ददाति । '[6]तद्विष्णोः परमं पदं—इमास्सुमनस' इति पुष्पं 'तद्विप्रास—इमे गंधा' इति गंधं 'परो मात्रया—बृहस्पति'रिति धूपं 'विष्णोः कर्माणि—शुभ्राज्योति'रिति दीपं पृथक् पृथक् मूर्तिभिः संयोज्य ददाति । 'आ मा वाज'स्येत्यर्घ्यपात्राणि संशोध्य वसिष्ठं सोमं यज्ञांगमिन्दुं चन्द्रमिति [7]पात्राधिदेवमाराध्य प्रथमं सिद्धार्थकं द्वितीयं कुशाग्रं तृतीयं तिलं चतुर्थं तंडुलं पंचमं दधि षष्ठं क्षीरं सप्तममक्षतमष्टमं तोयमिति संगृह्य कुडुबमात्रं पृथक् पृथक् गायत्र्या क्षिप्त्वा घृतेनाभिघार्य '[8]अग्नरिन्द्रावरुणा वुहे' त्यादिनाभिमृश्य '[9]त्रिर्देवः—इन्द्रिया'णीति विष्णवे 'हिरण्यगर्भ' इति पुरुषाय 'इदमापः शिवा' इति सत्याय '[10]नारायणाय विद्महे' इत्यच्युताय 'कयानश्चित्र' इत्यनिरुद्धाय अर्घ्यं निवेद्याचमनं [11]पूर्ववत् ददाति ।

मन्त्रासनम्

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे ध्यानावाहनादिविधिर्नामैकोनसप्ततितमोऽध्यायः[12] ॥



---

1. क्वाचित्कः पाठः . च. सकृत् 3. ग. स पुष्पेण 4. विश्वादिकानां भाष्यपाठः 5. संस्राव्य 6. अत्र पुष्पगंधधूपदीपोपचारेषु छ. कोशे द्वितीय एव मन्त्रो विनियुक्तो दृश्यते । 7. ट. म. पात्रेष्वाराध्य 8. ग. अग्नेरिंद्रादिना 9. त्रिर्देव इति छ. कोशे नास्ति 10. छ. तत्पुरुषायेत्यच्युताय 11. ट. कोशमात्रे 12. ग. षोडशोत्तरशततमः सर्गः

## ॥ अथ सप्ततितमोऽध्यायः ॥

'इषे त्वोर्जे'त्वेति [1] मन्त्रस्नानं 'मित्रस्सुवपर्ण' इति प्लोतं 'तेजो वत्सव' इति वस्त्रं 'सोमस्य तनूर'सीत्युत्तरीयं 'भूतो भूते'ष्वित्याभरणं 'अग्निं दूत'मित्युपवीतं पञ्चभ्यो मूर्तिभ्यः संयोज्य ददाति । पूर्ववत्पाद्याचमनपुष्पगंधधूपदीपान् दत्वा 'अथावनीद्'मिति मण्डलं करोति । अलङ्कारासनम्

तथा हविः पात्राणि संशोध्य आदित्यं भास्करं सूर्यं मार्ताण्डं विवस्वन्तमिति पात्राधिदेवमाराध्य पुष्पादीन् संशोध्य 'देवस्यत्वे' [3] त्याज्येनाभिपार्य [1] पात्रे'ष्वमृतोपस्तरणम'सीति हवींषि प्रक्षिप्य अथ फलगुडोपदंशादीन् गायत्र्या क्षिप्त्वा अन्नसूक्तेनाभिमृश्य 'यत्ते सुसीम' इति घृतमास्राव्य 'सुभूः स्वयं भू'रिति विष्णवे सर्वं हविर्निवेद्य 'हिरण्यगर्भ' इति पुरुषाय पायसं 'इह पुष्टि'मिति सत्याय कृसरं 'समाववर्ता' त्यच्युताय गौल्यं 'त्रीणि प'देत्यनिरुद्धाय यावकं हविः निवेद्य देवीभ्यामृषिभ्यां निवेद्याग्निं परिषिच्य अतो देवादिना हुत्वा आलयगतेभ्यो देवेभ्यः [5] चतसृभिर्मूर्तिभिर्हुत्वा अग्निं विसृज्य द्वारपालेभ्यो विमानपालेभ्यो लोकपालेभ्योऽनपायिभ्यः तत्तन्नाम्ना प्रणवादि नमोन्तं पुष्पान्नयुतं बलिं तत्तत्प्रदेशे क्षिप्त्वा बलिशेषं पीठस्य दक्षिणे पार्श्वे 'भूतयक्षपिशाचनागेभ्यो बलिं निर्वपा'मीति निर्वाप्य आचम्य 'इदं विष्णु'रीति पानीयं दत्वा आचमनं पूर्ववद्ददाति । भोज्यासनम् होमः बलिः

'घृतात्प'रीति मुखवासं प्रदाय विधिना बलिमाराध्य प्रदक्षिणं कारयति । मस्तिष्कं संपुटं प्रह्वाङ्गं पञ्चाङ्गं दण्डाङ्गमिति पञ्चभिः [6] प्रकारैः विष्णुसूक्तेनानम्य विष्णुगायत्र्या पुष्पाञ्जलिं ददाति । प्रणवेन यथाशक्ति दक्षिणां दत्वा द्वादशाक्षरेणाष्टाक्षरेण प्रणम्य प्राणायामं जप्त्वा देवं बेरे समारोपयेदन्त्यवेलायामिति[7] विज्ञायते ॥ प्रणामप्रकारः

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे नित्यार्चनाविधानं नाम सप्ततितमोऽध्यायः [8] ॥

---

1. A. M. ग. स्नानमित्येव 2 ट. पात्रेष्वाराध्य 3. छ अभिघार्येत्येव 4. छ. पात्रे अमृतोपस्तरणमसीति हविः प्रक्षिप्य 5. M. मूर्तिमन्त्रैः हुत्वा 6. छ. प्रकारैरानम्य सहस्रशीर्षादिना स्तुत्वा विष्णुगायत्र्या पुष्पाञ्जलि दत्वा द्वादशाक्षरैर्वा प्रणम्य प्राणायामं जप्त्वा देवं बेरे समारोप्येत् M. द्वादशाक्षरेण प्रणम्य 7. ट. इति काश्यपः 8. ग. इति सप्तदशोत्तरशततमः खण्डः

## ॥ अथैकसप्ततितमोऽध्यायः ॥

अथ बलिविधिं व्याख्यास्यामः । सुवर्णरजतताम्राणामन्यतमस्य त्रिशतैः शतैः पञ्चाशद्भिः पलैर्वा भुवङ्गस्यार्धसमं तद्भुवङ्गपञ्चभागं कृत्वा त्रिभागं द्विभागं वा बलिपात्रं समवृत्तं तन्मध्ये कर्णिकाकारमष्टाङ्गुल- विस्तृतायतमेकाङ्गुलोन्नतं चतुरङ्गुलायताष्टदलयुतं परितोमित्त्युन्नतं द्व्यङ्गुलमर्धाङ्गुलं समवृत्तं तत्पात्रं कृत्वा प्रस्थाधिकतण्डुलैः पक्वमन्नं संगृह्य बलिपात्रं प्रक्षाल्य तन्मध्ये रविमण्डलं ध्यात्वा आदित्यं भास्करं सूर्यं मार्ताण्डं विवस्वन्तमिति पात्राधिदैवत- माराध्य 'देवस्य त्वे'त्याज्येनाभिघार्य पात्रे 'अमृतोपस्तरणम'सीत्यन्नं प्रक्षिप्य 'यत्ते सुसीम' इति घृतमास्राव्य अन्नं प्रजापतिं ब्रह्माणममृतमयं सर्वभूतमित्यन्नाधिदेवं पूजयित्वा तत्समं मध्ये सुस्थितं सुदृढं सोष्णं द्वादशाङ्गुलैरेकादशाङ्गुलैर्वोच्छ्रयं द्विगुण- परीणाहमूलं तदर्धमग्रं किञ्चित्फुल्लाम्बुजाकारं हस्ताभ्यां बलिं कृत्वा पात्रं रविमण्डलं बलिमम्बुजं स्मृत्वा तन्मध्ये सुवर्णवर्णं रक्तास्यं रक्तनेत्रं सुखोद्वहं शुकपिञ्छाम्बरधरं विष्णुं प्रणवात्मकं किरीटकेयूरहारप्रलम्बयज्ञोपवीतिनं श्रीवत्साङ्कं चतुर्भुजं शङ्ख- चक्रधरमेवं ध्यात्वा योगेशं परंब्रह्माणं परमात्मानं भक्तवत्सलमिति चतसृभिर्मूर्तिभिरा- वाह्य अर्घ्यान्तं पूजयेत् । अन्नबलेरधिदेवो रविः । बलिविधि अन्नबलि

अन्नाभावेऽर्घ्यबलिः । तस्याधिदेवः शशी । तस्मात्पात्रे शशिमण्डलं ध्यात्वा वसिष्ठं सोमं यज्ञाङ्गमिन्दुं चन्द्रमित्यधिदेवमाराध्य पुष्पादीन् संशोध्याऽर्घ्यं निधाय पूर्ववद्देवमावाह्याभ्यर्चयेत् । 'ब्रह्मा देवानां- हिरण्यगर्भ' इत्यभिमृश्य 'देवस्य' त्वेति तद्बलिं देवाभिमुखे दर्शयित्वा निधाय देवमनुमान्य स्थित्वा अतो देवादीन् जपेत् । अर्घ्यबलि.

पूर्वोक्तलक्षणसंपन्नो बलिधारको वस्त्रोत्तरीयस्वर्णसूत्राङ्गुलीयाभरणहेमपुष्पादिभि- रलङ्कृतः श्रीभूतस्य पश्चिमे देवाभिमुखस्तिष्ठन् [1]सहस्रशीर्षादीन् जपेत् । तं शिष्यं [2]गरुड इति ध्यात्वा पुष्पगन्धाक्षतादिना पूजयित्वा 'आपो हि'ष्ठेति प्रोक्ष्य ततोभ्यन्तरं प्रविश्य देवं प्रणम्य बलिमुद्धृत्य घण्टां ताडयित्वा 'उद्यन्त'मिति जपन् गुरुश्शिष्यस्य शिरसि स्थापयेत् । बलिभ्रमणम्

1. ट. सहस्रशीर्षादि 2. A. गरुडं.

## ॥ अथैकाशीतितमोऽध्यायः ॥

[1] जगतामिन्द्रादिदेवानां च पीडाकर[2]हिरण्यवधार्थं भक्तरक्षणार्थं च[3] स्थूणादाविरभूत् स्थूणजो नारसिंहः। तत्काले च [4] हिरण्यवधं दृष्ट्वा देवा देवेशस्य महाबलमित्यूचुः । तस्मान्महाबलमित्येनं प्रशंसन्ति । नारसिंहस्य उपधानरहिते सिंहासने [5] समासीनस्य अतितीक्ष्णनखयुतदीर्घपाणियुताः भुजाश्चत्वारः द्वौ चक्रशङ्खधरौ विना वापि तथोद्धृतो दक्षिणोऽन्यो दानकरः [6] वामः प्रबुद्धः तदूरौ न्यस्तः मुखमन्यद्रूपं च पूर्ववत् । महाकोपयुतं देवं तन्मुकुटोपरि छत्रं रक्तवर्णं भित्तिपार्श्वे पूर्ववच्चामरधरौ किष्किन्धसुन्दरौ च कारयित्वा सिंहासनादधस्तात् दक्षिणवामयोश्च [7] 'प्रभो ! कोपमुपसंहर'ेति देवेशमुद्वीक्ष्य वन्दमानौ [8] ब्रह्मेश्वरौ च पूर्ववत्कारयित्वा दक्षिणे प्राञ्जलीकृतां [9] श्रियं देवीं वन्दमानं द्विहस्तं प्रह्लादं च वामे पूर्ववत् तत्तत् स्थाने अन्यपरिवारांश्च कारयेत् । अथवा श्रीदेवीं प्रह्लादनारदलोक-पालान् भित्तौ समुल्लिखेत् । एवं स्थूणजं नारसिंहमाधिव्याधिभीतिविनाशार्थी [10] जयकीर्त्यायुष्यकामो वा महापद्मे स्वस्तिके [11] पद्मभद्रके वा [12] विमाने तदुपरितले प्रतिष्ठाप्यार्चयेत् [13] । [14] एतयोर्नारसिंहयोः आहवनीये प्रधानाग्नौ हौत्रशंसनं आवाहनादीनि कुर्यात् । 'अहोबलं सर्वबलं बलातिबलमनन्तबल'मिति गिरिजं पुरा ब्रह्मा समर्चयत् । 'सुधृतिं सर्वाधारं कामबलममोघजेतार'मित्येनं रुद्रः । 'कर्मबलं [15] नाथबलमनन्तबलमचिन्त्यबलमर्दन'मितीन्द्रः । अन्ये मुनयोऽप्यपूजयन् । तस्मादेतैः द्वादशनामभिः गिरिजनारसिंहस्यावाहनादीनि । 'नारसिंहं तपोनाथं महाविष्णुं महाबलमनन्तबल'मिति स्थूणजं सर्वेऽप्यपूजयन् । तस्मादेतैः पञ्चनामभि-रेवं स्थूणजनारसिंहस्यावाहनादीनि । ब्रह्मेशानिरुद्धश्रीनारदयज्ञतीर्थलोकपालाद्यन्य-परिवारदेवानां पूर्ववत् । 'प्रह्लादं दैत्यपतिं विष्णुभक्तं [16] महामति'मिति प्रह्लादस्य सामवेदं [17] शान्तिसुखं गुरुपर्वमुदारधिय'मिति सामवेदस्य 'भूतीशं दिव्यराशिं

---

1. ग. जगदादिदेवानां 2. क. हिरण्यकशिपु 3. क. च तथा 4. क. हिरण्य-कशिपुवधं 5. क. सुखासीनस्य 6. क. वामतः प्रबद्धः 7. क. प्रभूतं कोपमुपसंहरन्तौ 8. क. ब्रह्मेशौ 9. क. श्रीदेवीं वन्दमानां द्विहस्तां 10. क. विनाशार्थं 11. छ. पद्मभर्तृके म. भर्तृके 12. विमान इति क. कोशे नास्ति 13. ग. इति १४९ खण्डः 14. म. एतयोरिति नास्ति 15. क. अनाथबलमचिन्त्यबलमरिमर्दनं 16. म. महाबलं 17. क. शान्तिसुखं गुरुपूर्व

सर्वलोकसुखावहं सर्वविघ्नविनाशन'मिति भूतीशस्यावाहनादीनि । [1]पारमात्मिकेषु 'यो वा नृसिंह' इत्यष्टाधिक[2]शतमावर्त्य जुहुयात् । अन्यानि पूर्ववत् । [3]हविर्निवेदने बलिदाने च पायसं श्रेष्ठमिति विशेषः[4] ।

त्रैलोक्याधिपान्महाबलेः देवार्थं त्रैलोक्यं छलेनादतुं वामनोऽभवत्[5] । देवस्तदादाय महारूपी त्रिविक्रमणेन त्रिलोकं मानं कर्तुं त्रिविक्रमोऽप्यासीत् । तौ सहैव स्थापयेत् । वामनं पृथगेवेति केचित् ।

वामनस्य

त्रिविक्रममष्टभुजं चतुर्भुजं द्विभुजं वा कारयेत् । भुजेषु दक्षिणेषु चक्रासिगदाशक्तिधरं वामेषु [6]शङ्खसशरशार्ङ्गखेटकधरं अन्यवामहस्त[7]मुद्धृतपादेन प्रसार्य [8]तथैव स्थितं वामपादमुद्धृत्य दक्षिणेन सुस्थितं महावेगयुतं किरीटाद्याभरणभूषितमेवमष्टभुजमथवा द्विहस्ताभ्यां चक्रशङ्खधरमन्येन दक्षिणेन जलादानमहाहर्षयुतमेवं चतुर्भुजं अथवा दक्षिणेन जलादनपरं [9]वामहस्तमुद्धृतपादेन सह प्रसार्य स्थितमेवं द्विभुजम् । त्रिविक्रमं केचिद्द्विभुजं नेच्छन्ति । क्रमात्पादोद्धरणात् त्रयोऽपि त्रिविधा भवन्ति । प्रथमो द्वितीयस्तृतीय इति । भूलोकमानाय वामपादे जानुमात्रमुद्धृते प्रथमः । अन्तरिक्षलोकमानाय नाभिमात्रमुद्धृते द्वितीयः । स्वर्गलोकमानाय [10]ललाटमात्रमुद्धृते तृतीयः । त्रिविक्रममेवं कारयित्वा तदुद्धृतपादतलं प्रगृह्य प्रक्षालनपरं पद्मस्थं ब्रह्माणं ततः [11]संरुवद्रूपां स्वर्गान्तरिक्षगामूर्ध्वावलम्बिनीं नाभेरूर्ध्वे[12]शरीरिणीमधः स्रोतोरूपां प्राञ्जलीकृतद्विहस्तां श्वेतभां गङ्गामुद्धृतपादपार्श्वे भ्रममाणं दैत्यं श्यामाभं नमुचिं [13]भेरीताडनपरं कपिमुखं नररूपं नीलाभं जाम्बवन्तं अपरभित्त्यूर्ध्वभागे छत्रधरमाकाश[14]स्थमिन्द्रं पार्श्वयोः चामरधरौ यमवरुणौ च स्थितपादाद्वामे [15]अतिशयेन प्रह्वायमानं शुक्रं तदूर्ध्वे मुष्ट्या प्रहरन्तं गरुडं त्रिविक्रमस्य दक्षिणे श्यामवर्णं बटुरूपं द्विभुजं दक्षिणेनोदकादनपरं वामेन छत्राषाढधरं कौपीनवाससं वामनं दक्षिणे [16]जलदानाय पाणिभ्यां कलशमुद्धृत्य स्थितं सुमुखं सर्वाभरणभूषितं

1. क. पारमात्मिकमन्त्रेषु 2. क. शतमाज्येन 3. क. हविरिति नास्ति 4. ग. इति १५० खण्डः 5. क. बभूव. स एव तदादाय त्रिविक्रमेण 6. क. शङ्खमुसलशार्ङ्ग 7. क. उद्धृत्य 8. तथैवेत्यादि सहप्रसार्येत्यन्तं म. कोशे न दृश्यते 9. म. वाममुद्धृत 10. क. ललाटान्तं 11. A. सहस्रप्रभामिव 12. क. शरीरं 13. अत्र भेरीताडन—पर अनयोः पदयोर्मध्ये सर्वेषु मातृकाकोशेषु ग्रन्थपातः सूचितः 14. क. आकाशे इन्द्रं 15 म छायानं प्रह्वायमाणं .16. क. जलादानायेव राज्ञीभ्यां.

सुवर्णवर्णं महाबलिं पूजकं कनकाभं कनकं शाङ्खाभं शंकिलं च [1] मार्कण्डेयभृगू वा कारयेत् ।

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे स्थूणजनारसिंहलक्षण-
नृसिंहद्वयप्रतिष्ठावामनत्रिविक्रमलक्षणं
नामैकाशीतितमोऽध्यायः [2] ॥



## ॥ अथ द्व्यशीतितमोऽध्यायः ॥

विद्यार्थी वामनं भूलोकविजयार्थी त्रिविक्रमं प्रथममन्तरिक्षजयार्थी द्वितीयं स्वर्गलोकजयार्थी तृतीयं सर्वलोकजयकामोऽष्टभुजं सार्वभौमकामः चतुर्भुजं राज्यार्थी द्विभुजमेवं त्रिविक्रमं सोमच्छन्दे दीर्घशालायां त्रिकूटे [3] गोपुराकारे गरुडाकारे छत्राकारे चतुःस्फुटे वा विमाने सहैव स्थापयेत् । त्रिविक्रमस्य कौतुकं [4] बिम्बं विष्णुमेव कारयेत् । पृथक् चेत् वामनं हस्तेन दक्षिणेन दण्डधरं वामेन छत्रधरं देवं कारयित्वा पूजकौ कनकशंकिलावेव कारयेत् । द्वयोः प्रतिष्ठायामन्वाहार्ये प्रधानाग्नौ हौत्रशंसनादीनि 'त्रिविक्रमं त्रिलोकेशं सर्वाधारं वैकुण्ठ'मिति त्रिविक्रमस्य 'वामनं वरदं काश्यपमदितिप्रिय'मिति वामनस्य 'कनकं मुनिमुख्यं सुतपसं दयापर'मिति कनकस्य 'शङ्किलं [5] महामतिं वरधर्मं तपोधिक'मिति शङ्किलस्य 'असुरेन्द्रं महाबलिं सुखदं वैरभोजन'मिति महाबलेः 'जाम्बवन्तं [6] नीलाभं [7] चिरज्ञं [8] त्रिलोकपर'मिति जाम्बवतः पूर्ववदन्यदेवानां चावाहनादीनि । पारमात्मिकेषु[9] 'यो वा त्रिमूर्ति'रित्येकमष्टाधिकशतमावर्त्य जुहुयात् । विष्णुसूक्तेन प्रतिष्ठामाचरेत् । आकाशस्थदेवानां [10] तत्तदुद्दिश्याधस्तात् पीठेऽर्चनमिति विशेषः । अन्यानि पूर्ववदिति[11] ।

वामनस्य

महाबलबहुक्षत्रियवधाद्भूमिभारनिर्हरणार्थं जमदग्नेरुद्भूतो [12] जामदग्न्यरामः । तं देवं द्विभुजं [13] दक्षिणेन परशुधरं वामेनोद्देशकरं नीलाम्बरधरं वीरमार्गेण स्थितमासीनं वा कारयेत् । [14] देवं जमदग्निरामं फेलाकारे

जामदग्न्य-रामस्य

1. क. मार्कण्डेयं भृगुं च 2. ग. इति १५१ खण्डः 3. क. गोपुराकारे चतुःस्फुट इत्येव 4. क. बिम्बं चतुर्भुजं 5. क. महामुनिवरं वरधर्मं 6. क. नीलनिभं 7. क. त्रिकालज्ञं B. चरज्ञं 8. म. त्रिलोकवरं 9. क. मन्त्रेषु इत्यधिकम् 10. क. तानुद्दिश्य 11. ग. इति १५२ खण्डः 12. क. जामदग्न्यः 13. छ. दक्षिणं परशुधरं वामं 14. क. परम्.

अञ्जनाकारे श्रीप्रतिष्ठितके महाशंखे वा विमाने तपोज्ञानजयार्थी स्थापयेत् । अस्यावसत्थ्ये हौत्रप्रशंसनादीनि । 'रामं जमदग्निसुतं भद्रं परशुपाणिन'मिति परशुरामस्य परिवारदेवानां पूर्ववत् । पारमात्मिकेषु[1] 'विष्णुर्वरिष्ठ' इत्येकमष्टाधिकसप्तशतं[2] जुहुयादेष विशेषः । अनुक्तं पूर्ववदिति[3] ।

इन्द्रादिदेवानामृषीणां हिंसनकरं रावणं हन्तुं रघोरन्वये राघवरामोऽभूत् ।

राघवरामस्य एष सायुधो निरायुधश्चेति द्विविधो भवति । साधनवतालेन मानेन राघवरामं [4]श्यामाभं द्विभुजं दक्षिणेन पाणिना तीक्ष्णशरधरं वामेन धनुर्धरं किरीटमुकुटादिसर्वाभरणभूषितं [5]त्रिभंगस्थितं [7]दक्षिणे अष्टतालमानेन देवीं द्विभुजां वामेन पद्मधरां दक्षिणमधः प्रसार्य [7]तथैव स्थितां देवस्य वामे लक्ष्मणं पीताभं रामवत्तथा शरधनुर्धरं किञ्चि[8]द्वामाश्रितं प्रमुखे वार्ताविज्ञापनपरं कपिरूपं द्विभुजं दक्षिणेन पिहितास्यं वामेन स्वाम्बरावकुण्ठनपरं हनूमन्तं च कारयेत् । एवं सायुधं रामं [9]सार्वभौमकामी श्रीकामो वा फेलाकारे अञ्जनाकारे त्रिकूटे स्वस्तिके चतुःस्फुटे वा विमाने मण्डपे प्रतिष्ठाप्यार्चयेत्[10] । सिंहासने [11]वामं पादमाकुञ्चितं दक्षिणं प्रसार्य हस्तं दक्षिणमभयं वामं कट्यवलम्बन[12]करमासीनं देवं तद्दक्षिणे पार्श्वे देवीं द्विभुजां वामेन पद्मधरां दक्षिणं कट्यां न्यस्य पादं वाममाकुञ्च्य दक्षिणं प्रसार्य देवं किञ्चिद्वीक्ष्य सहर्षमासीनां सीतां च तत्सिंहासनादधस्ताद्वामतः प्राञ्जलीकृत्य स्थितं लक्ष्मणं दक्षिणे तथा हनूमन्तमेवं निरायुधम् । भरतशत्रुघ्नाभ्यां [13]श्यामपीताभ्यां तथैव स्थितं लक्ष्मणं सिंहासनादधस्तादासीनं वेति केचित् । एवं निरायुधं राघवं देवं सत्पुत्रदयासत्यतपःश्रीकामः स्थापयेत् । रामस्यान्वाहार्ये प्रधानाग्नौ हौत्र[14]शंसनावाहनादीनि । 'रामं दाशरथिं वीरं काकुत्स्थ'मिति रामस्य 'सीतामयोनिजां लक्ष्मीं वैदेही'मिति सीतायाः 'रामानुजं सौमित्रिं लक्ष्मणं लक्ष्मिवर्धन'मिति लक्ष्मणस्य 'भरतं रामप्रियं कैकेयीसुतं सद्वृत्त'मिति भरतस्य 'शत्रुघ्नं सुमनस्कं लक्ष्मणानुजं दशरथोद्भव'मिति शत्रुघ्नस्य 'कपिराजं हनूमन्तं शङ्कराशिं महामति'मिति

1. मन्त्रेष्वित्यधिकं क. कोशे दृश्यते 2. क. अधिकसप्तशतं. म. इत्येकं सप्तभिः जुहुयात् । 3. ग. इति १५३ खण्डः 4. ग. श्यामं । 5. क. त्रिभङ्गं सीतां 6. क. तद्दक्षिणे । 7. A. तथैवं 8. क. वामे स्थितं 9. क. सार्वभौमत्वकामः त्रिवर्गकामो वा 10. ग. इति १५४ खण्डः 11. क. पादं वामं 12. क. परं 13. क. श्यामरक्ताभ्यां ज. श्यामसिताभ्यां 14. क. प्रशंसन.

हनूमतः परिवारदेवानां पूर्ववत् । पारमात्मिकेषु[1] 'स्वोजसा सर्व'मित्येकाधिकसप्तमि[2]र्जुहुयात् । एष विशेषः । अनुक्तं पूर्ववदिति विज्ञायते[3] ।

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे वामनत्रिविक्रमजामदग्न्यरामराघवरामप्रतिष्ठाविधिर्नाम
ज्यशीतितमोऽध्यायः[4] ॥



## ॥ अथ त्र्यशीतितमोऽध्यायः ॥

बलाद्दुराचारदैतेयवधार्थं वसुदेवाद्धलरामः नरकाद्यसुरान् शिशुपालादिनृपान् हन्तुं कृष्णोऽप्यभवत् । तावपि सायुधौ निरायुधौ चेति द्विविधौ भवतः । दशतालमानेन बलरामं शङ्खाभं नीलाम्बरधरं द्विभुजं दक्षिणेन मुसलधरं वामेन हलधरमेवं सर्वाभरणभूपितं बलभद्रं सायुधमेकबेरविधिना महाबलकामः सोमच्छन्दे हस्तिपृष्ठे वा विमाने स्थापयेत् । तथा सिंहासने राघवरामवदासीनं बलभद्रं सीतावदासीनां रेवतीमञ्जनाभां अथवा तत्सिंहासनस्यार्धे सह समासीनं कृष्णं वा कारयेत् । एवं निरायुधं बलभद्रं कामभोगशुभार्थी स्थापयेत् । एतस्याहवनीये प्रधानाग्नौ हौत्रशंसनादीनि । 'बलरामं वीरं यदुवरं हलायुध'मिति बलरामस्य 'रेवतीमिन्दिरां लक्ष्मीं रामप्रिया'मिति रेवत्याश्चावाहनादीनि । पारमात्मिकेषु[5] 'रायामीश'[6] इत्येकविंशतिमावर्त्य जुहुयात् । अन्यानि पूर्ववदिति[7] । नवतालमानेन कृष्णं श्यामलाङ्गं[8] पीतवाससं द्विभुजं दक्षिणेन क्रीडायष्टिधरं वामेनोत्क्षिप्तकरं त्रिभङ्गस्थितं कुन्तलमुकुटं सर्वाभरणभूषितं दक्षिणे सीतावत् स्थितां रुक्मिणीं कृष्णाभां वामे सत्यभामां पीताभां दक्षिणेन हस्तेन पद्मधरां प्रसारितवामहस्तां च कारयेत् । अथवा वामपार्श्वे देवहस्ताधारदक्षिणस्कन्धं द्विभुजं प्राञ्जलीकृतं गरुडं कारयेत् । एवं सायुधं कृष्णमैश्वर्यभोगार्थी गणिकाविहारे कुम्भाकारे गोपुराकारे विमाने वा स्थापयेत्[9] । तथा सिंहासने राघवरामवदासीनं

बलरामकृष्णौ

1. मन्त्रेष्विदमधिकं क. कोशे 2. क. एकाधिकं सप्तति 3. विज्ञायत इति म. कोशे न दृश्यते 4. ग. इति १५५ खण्डः 5. A. कोशेषु मन्त्रेष्विदमधिकं 6. म. एकविंशतिः 7. ग. इति १५६ खण्डः 8. क. श्यामलाभं 9. ग. इति १५७ खण्डः

कृष्णं दक्षिणे सीतावदासीनां रुक्मिणीं वामे दक्षिणपादमाकुञ्च्य वामं प्रसार्य तथासीनां सत्यभामां च कारयेत् । एवं निरायुधं कृष्णं महाभोगसुखप्रीतिकामः स्थापयेत् । यद्यद्रूपेण देवो यद्यत्कर्म कृतवान् तत्तद्रूपं [1]यथाभक्ति कारयेत् । पीठे पादेन वामेन कुञ्चितेन स्थित्वा समाकुञ्चितं दक्षिणमुद्धृत्य हस्तं दक्षिणं नवनीतयुतमभयदं[2] वा [3]अन्यमुत्तानं प्रसारितं कृत्वा बहुग्रन्थियुताम्बराधारयुतमम्बरहीनं नवनीतनटं देवमथवा सप्तभिः पञ्चभिर्वा फणैर्युक्तस्य कालीयनागस्य फणोपरि पूर्ववत् नृत्यन्तं प्रसारितवामहस्तेन [4]गृहीत्वा कालीयनागपुच्छमेवं कालीयमर्दनं कारयेत्[5] । कृष्णरूपाण्यनेकानि तेषु यथेष्टरूपं कारयित्वा स्थापयेत । एतस्य पौण्डरीकाग्नौ[6] हौत्रप्रशंसनादीनि 'कृष्णं पुण्यं नारायणं वटपत्रशायिनं [7]त्रिदशाधिप'मिति कृष्णस्य 'रुक्मिणीं सुन्दरीं देवीं पद्मा'मिति रुक्मिण्याः 'शतरूपां सतीं [8]सन्नतीं क्षमा'मिति सत्यभामायाश्च । अन्यपरिवारदेवानामावाहनादीनि पूर्ववत् । पारमात्मिकेषु[9] 'यं त्वां सर्वं पालना'येत्येतेनैवाष्टाधिकशतमावर्त्य जुहुयादिति विशेषः[10] ।

युगान्ते [11]संहारार्थं कल्की च भविष्यति । तस्य नैव भेदः । पूर्ववदेव[12]रूपं कारयित्वा स्थापयेत् । तस्यापि पौण्डरीकाग्नौ हौत्रशंसनादीनि । 'कल्किनं [13]कामरूपं सर्वेशं सर्वसंहार'मिति कल्किनश्चावाहनादीनि । पारमात्मिकेषु 'धूर्नो वहन्ता'मित्येकविंशतिकृत्वो जुहुयात् । [14]एवमवमाननाशार्थी कल्किनं मयूराकारे कूर्माकारे भूताकारे वा विमाने प्रतिष्ठाप्यार्चयेत् । अथवा देवेशस्य विष्णोः पार्श्वे दक्षिणतो मुखमण्डपे [15]तदावरणे [16]विनैव परिवारैः सायुधं रामं सीतालक्ष्मणाभ्यां हनूमता च सार्धं वामतः कृष्णं च सायुधं देवीभ्यां गरुडेन च युक्तं अन्यत्प्रादुर्भावरूपं वा यथेष्टमेव स्थापयेदिति ।

कल्किनः

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे बलरामकृष्णकल्किप्रतिष्ठाविधिर्नाम त्र्यशीतितमोऽध्यायः[17] ॥

---

1. B. यथाशक्ति. 2. म. अभयं 3. म. उत्तानप्रसारितं 4. क. गृहीतकालियनागपुच्छं 5. ग. इति १५८ खण्डः 6. छ. अग्निकुण्डे 7. A. त्रिदशाधिपतिं 8. क. सन्नतिं 9. क. पारमात्मिकमन्त्रेषु 10. ग. १५९ खण्डः 11. A. सर्वदुष्टसंहारार्थं 12. रूपमिति क. कोशे नास्ति 13. कामरूपिणं 14. घ. देवमासनाशार्थीः (?) 15. क. अन्तरावरणे (?) क. भरावरणे 16. क. विमाने परिवारैः (?) 17. ग. इति १६० खण्डः.

## ॥ अथ चतुरशीतितमोऽध्यायः ॥

अथ वसुदेवादुद्भूतो वासुदेवः मनुष्यरूप[1]धारणान्मानुषवासुदेवः दैविकरूपधारणात् दैविकवासुदेवश्चेति द्विविधो भवति । मनुष्यवद्द्विभुजं [2]चक्रधरं श्यामलाङ्गं किरीटमुकुटादिसर्वाभरणभूषितं तस्य दक्षिणे पूर्ववत् रुक्मिणीं तद्दक्षिणे [3]हलमुसलधरं तथा बलभद्रं तद्दक्षिणे प्रद्युम्नं रक्ताभं पीतकौशेयवस्त्रं द्विभुजं दक्षिणेन क्षुरिकाधरं वामेन कट्यवलम्बनकरं तद्दक्षिणे ब्रह्माणं च यथोक्तं वासुदेवस्य वामेप्यनिरुद्धं द्विभुजं खड्गखेटकधरं पुष्पाम्बरधरं तस्य वामे नीलाभं श्वेताम्बरधरं [4]द्विभुजं दक्षिणेनोत्तानकरमन्येन दण्डधरं [5]साम्बं तस्य वामे तथा गरुडं च कारयित्वा तेषां च पृथक् पृथक् [6]कौतुकबिम्बानि कारयेत् । अथवा ब्रह्मपद्ममध्ये चतुर्भुजं विष्णुमेकमेव कौतुकबिम्बं स्थापयेत् । एवं मानुषवासुदेवं दीर्घशालायां गोपुराकारे विमाने श्रीकीर्ति[7]शौर्यवीर्यादिकामः प्रतिष्ठाप्यार्चयेत् । वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धसाम्बान् [8]पञ्चवीरानिति विज्ञायते ।

वासुदेवद्वयम्

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे मानुषवासुदेवलक्षणं नाम चतुरशीतितमोऽध्यायः[9] ॥



## ॥ अथ पञ्चाशीतितमोऽध्यायः ॥

अथ वासुदेवं देवेशं चतुर्भुजं तथा श्रीभूमिभ्यां सहितं दैविकं वासुदेवं मध्ये तद्दक्षिणवामयोः बलभद्रादींश्च देवान् सायुधान् निरायुधान्वा पूर्ववत्कारयित्वा बलभद्रदेवीं रक्ताभां रेवतीं प्रद्युम्नदेवीं नीलाभां रोहिणीमनिरुद्धदेवीं श्यामाभां रमां साम्बस्य देवीं पीताभामिन्दुकरीं च पद्मधरैकहस्ताः प्रसारितान्यहस्ताः तत्तद्देवीः तत्तत्पार्श्वे च कारयेत् । एवं दैविकवासुदेवं स्वदारपुत्रपौत्रभ्रातृपूर्वस्वकुलवर्धनायुरारोग्यैश्वर्यसुखभोगश्रीकीर्त्यादिकामः सोमच्छन्दे बृहद्वृत्ते वा विमाने प्रतिष्ठाप्यार्चयेत् । द्विविधवासुदेवस्यापि सभ्याग्नौ हौत्रशंसनादीनि कुर्यात् । 'वासुदेवं यदुवरं

---

1. म. धरणाच्च . . क. शङ्खचक्रधरं 3. हलमुसलधरं 4. क. द्विहस्तं दक्षिणेनैकेनोद्धृतदण्डधरं 5. साम्बशब्दस्थाने सर्वत्र साम्बव इति क. कोशेषु पाठः 6. क. कौतुकबिम्बादीनि कारयेत् क. मतिवीर्यशौर्यादि 7. क. पञ्चवीराः 8. ग. इति १६२ खण्डः.

[1] भूमिहितं पुरुषोत्तम'मिति मानुषवासुदेवस्य रुक्मिण्याः पूर्ववत् । [2] पूर्ववद्विष्ण्वादिपञ्चमूर्तिनामभिरेव दैविकवासुदेवस्य तथा देव्याः श्रीभूम्योश्च बलभद्रस्य रेवत्याश्च पूर्ववत् । 'प्रद्युम्नं [3] सुरूपाक्षं [4] मदनांशं महाबल'मिति प्रद्युम्नस्य । 'रोहिणीमिन्दुमुखीं प्रद्युम्नप्रियां पद्मा'मिति रोहिण्याः । ब्रह्मानिरुद्धयोश्च पूर्ववदेव । [5] 'रमामनिरुद्धप्रियां [6] सुरूपाममृतोद्भवा'मिति रमायाः 'साम्बं [7] सर्वसुखं समृद्धं [8] सामग'मिति साम्बस्य 'वराङ्गीमिन्दुकरीं साम्बप्रियां पुण्या'मितीन्दुकरीदेव्याः गरुडस्यान्यपरिदेवानां च पूर्ववदावाहनादीनि सभ्याग्नौ महाप्रतिष्ठोक्तवत् सर्वहोमं जुहुयात् । आहवनीये पुरुषसूक्तमन्वाहार्ये विष्णुसूक्तं गार्हपत्यावसथ्ययोः विष्णुगायत्रीमेकविंशतिकं हुत्वा तथौपासने ब्रह्मणो ब्राह्मं गरुडस्य गारुडं चैकविंशतिकृत्वः [9] तत्तद्धोमे तत्तन्मन्त्रैः जुहुयात् । स्नपनकुम्भपूजनशयनानि च पृथगेव कुर्यादेष विशेषः । अन्यानि सर्वाणि पूर्ववदेवेति **काश्यपः** [10] ।

अथ [11] स्नपनविधिं व्याख्यास्यामः । [12] प्रतिष्ठान्तोत्सवान्तविषुवायनेषु सूर्यस्य चन्द्रस्य वा [13] राहुग्रहणे च यत्नतो देवेशं संस्नापयेत् । विभवे सति श्रवणद्वादशीमासनक्षत्रादौ अन्यसंक्रमणेषु च दुर्निमित्तदुःस्वप्नावग्रहदुर्भिक्षव्याध्यादिसर्वोपद्रवशान्त्यर्थं च राज्ञो यजमानस्य वा [14] जन्मनक्षत्रेऽपि देवस्य स्नपनं कारयेत् ।

महास्नपनम् तत्रनिमित्तम्

यथोक्तमङ्कुरानर्पयित्वा स्नपनद्रव्याणि सम्भरति । नदीसस्यक्षेत्रतटाकदर्भमूल[15] गजदन्तोद्धृत [16] गोशृङ्गोत्करकुलीरवासवल्मीकेषु शुद्धां मृदं गृह्णाति । हिमवदूर्जविन्ध्यविदूरवेदपर्वतमहेन्द्र[17] पुरुश्चन्द्रशतशृङ्गाख्यानिमान् अष्टकुलपर्वतान् प्रागादिचतुर्दिक्षु क्रमेण श्वेतपीतरक्तकृष्णवर्णयुतान् अष्टाङ्गुलोच्छ्रयान् मूले [18] षडङ्गुलायतविस्तारान् अग्रे त्र्यङ्गुलविस्तृतान् चतुरश्रांश्च कारयति । शालिव्रीहियवमुद्गमाषप्रियङ्गुगोधूमचणकतिलतिल्वमसूरसर्षपाणि धान्यान्या-

स्नपनसम्भाराः प्राक्द्रव्याणि

1. म. भूमिसहितं 2. म. पूर्ववदिति नास्ति 3. क. स्वरूपाक्षं 4. ग. अदर्शनांशं 5. A. परमां 6. म. स्वरूपां 7. क. सर्वमुखं 8. म. सोमगं 9. क. तत्तद्धोमे तत्तद्देवानां च 10. ग. इति १६२ खण्डः 11. क. स्नपनं 12. क. प्रतिष्ठान्त उत्सवान्ते 13. म. राहोः 14. म. जन्मर्क्षेऽपि 15. क. गजशृङ्गोद्धृत 16. A. गोशृङ्गोद्धृत 17. क. हरिचन्द्र. 18. क. षडङ्गुलायतान्.

हरेत् । अङ्कुरार्पणोक्तधान्यानामङ्कुरांश्च । रुक्माभं श्रीवत्सं रक्ताभं सोदकं कुम्भं [1] रक्ताभां भेरीं च श्वेताभमादर्शं रक्तनेत्रं कृष्णपक्षयुतमूर्ध्वाननं[2] श्वेताभं मत्स्ययुग्मं कृष्ण-घृणीयुक्तं रक्ताभमङ्कुशं शङ्खाभं शङ्खं रक्ताभमावर्तम् । एतान् सप्ताङ्गुलोच्छ्रय-पीठयुतान् अष्टमङ्गलान् तथा पर्वतांश्च यज्ञोक्तवृक्षैः कृतान् मृदा वा कृतान् दग्धान्वा जतुनैवालिप्य तत्तद्वर्णयुतांश्च कारयेत् । तथैव पर्वतानामपि पीठं कुर्यादिति केचित् ।

पञ्चगव्यघृतदधिमधुक्षीरगन्धोदकाक्षतोदकफलोदककुशोदकरत्नोदकजप्योदक-सर्वौषध्युदकानि चेति द्वादशैतानि पृथक् पृथक् आढकादहीनं गृह्णीयात् । प्रधानद्रव्याणि

बिल्वपत्रकरवीरनन्द्यावर्तपद्मकुमुदानि पुण्यपुष्पाणि जातीफलकर्पूरश्रीवेष्टको-शीरमसूरदमनकमुद्गचणकानां चूर्णं [3] [ अश्वत्थवटमधूकखदिरवञ्जुलासनानां त्वक्चूर्णं कषायं नदीतटाककूपपल्वलेषु तीर्थोदकानि सिंहीनकुलव्याघ्र-नन्दादित्यसहपाठासहदेवीदूर्वावनौषधीः हरिद्रायाः सुवर्णाभं चूर्णं । ] अनुद्रव्याणि षड्भागतण्डुलचूर्णयुक्तं हरिद्राचूर्णमित्येके । हरेणुस्थौणेयकपत्रव्याघ्रनखागुरु [4] चूर्णं श्यामकचेरुवालमांसीजातीफलैलालवङ्गचन्दनकर्पूरोशीर[5] स्थिरनरदसान (?) कुस्तु-म्बुरुप्रभृति सर्वगन्धद्रव्याणां प्राण्यङ्गपुरीष[6] वर्जितानां चूर्णं कार्पासकृतं श्वेतं धौतवस्त्रं पलाशदूर्वापामार्ग[7] भूपकनन्द्यावर्तकरवीरकुशपत्त्रानिमान् मूलगन्धान् वस्त्रोत्तरीयाभरण-यज्ञोपवीतानि जातिहिङ्गुलिकमनश्शिलाञ्जनगोरोचनान् धातूंश्च समाहरेत् ।

आढकपूर्णान् कलशान् प्रस्थपूर्णान् शरावान् द्रोणार्धपूर्णान् करकान् द्रोणपूर्णान् घटान् चतुर्द्रोणपूर्णामुदधानीमन्यानि च भाण्डानि खण्डस्फुटितकालरहितानि समाहरेत् । [8] वेदिपरिस्तरणार्थान् पञ्च-दशदर्भैः कलशार्थान् सप्तभिः पञ्चभिर्वा कूर्चान् कुर्यात् । कलशादि-पात्राणि

---

1. ग. रक्तां 2. B. श्वेताननं 3. म. चिह्नितो भागः पुस्तके नोपलभ्यते 4. अत्र क. कोशे किञ्चित् त्रुटितम् 5. क. स्थिरदनारदपारद 6. A. वर्जं सञ्चितानां 7. छ. ख. भूमक 8. B. द्विवेदि.

पूर्वरात्रौ देवेशं विशेषतोऽभ्यर्च्य हविर्निवेद्य आलयाद्दक्षिणे प्रथमावरणे पूर्ववत्पञ्चशयनानि वासांसि वा आस्तीर्य प्रतिसरां बद्ध्वा [1] तथैव शाययेत् [2]। अथ देवालयस्याभिमुखे शयनमण्डपमुत्तरस्यामैशान्यां वा सप्तभिः द्वादशभिः षोडशभिः चतुर्विंशतिभिर्वा हस्तैः विस्तृतायतं चतुर्भिः द्वादशभिः षोडशभिर्वा [3] स्तम्भैश्च सहितमशक्तः शक्तश्चेदधिकैर्वा मण्डपं प्रपां वा कुर्यात्। तत्र चतुर्द्वारेषु [4] तोरणपूर्णकुम्भपताकाभिरन्तरे वितानध्वजदर्भमालास्तम्भवेष्टनाद्यैः यथाशक्त्यलङ्कृत्य तन्मध्ये श्वभ्रं चतुरश्रं परितश्चौपासनवत् द्विवेदिसहितं कृत्वा मध्ये तालमात्रनिम्नयुतं उत्तरतो जलनिर्याणमार्गयुतं श्वभ्रं कुर्यात्। [5] तत्प्रमाणाधिके बेरपीठे तत्परितश्चतुरङ्गुलायत-विस्तारयुतं श्वभ्रं कर्तव्यम्। तन्मध्ये बैल्वफलकां न्यसेत्। [6] वेदिं कदलीपद्म-कुमुदोत्पलादिपत्रैराच्छाद्य परिस्तरणकूर्चान् न्यसेत्।

पूर्वरात्रकर्तव्यम्

स्नपनालयः

शालालङ्कारः

तत् श्वभ्रस्य परितः तण्डुलैः व्रीहिभिर्वा द्वितालविस्ताराद्धीनां भागोन्नतां कोलकोन्नतां वा चतुर्दिशं द्वितालविस्तारद्वारयुतां पङ्क्तिं कृत्वा तत्र इन्द्रादि-[7]दिग्देवानां तत्तत्स्थाने पङ्क्तीशस्य नैर्ऋतवारुणयोर्मध्ये विष्वक्सेनस्य सोमेशानयोर्मध्ये द्वादशाङ्गुलविस्तृतानि षडङ्गुलोन्नतानि पीठानि कुर्यात्। तत्पङ्क्तिं गायत्र्या प्रोक्ष्य 'सुमित्रान' इति स्थलमुल्लिख्य 'हिरण्यपाणि'मिति दर्भानास्तरेत्। 'धारा' स्वित्युदकं गृहीत्वा वस्त्रेणोत्पवनं कुर्यात्। रात्रौ चेदग्निसन्निधावेवोदकं ग्राह्यम्।

कलशानाहृत्य यवान्तरमङ्गुल्यन्तरं वा तन्तुना परिवेष्ट्य अद्भिः प्रक्षाल्य यथोक्तैः पञ्चगव्यादिद्रव्यैः कलशान् सम्पूर्य तान् पिधानाद्यैरपिदधाति। [8] तत्पङ्क्त्यां यथोक्तस्थाने मृदादिद्रव्याणि संन्यसेत्।

नादेयाद्यष्टौ मृदः शरावेषु पृथक् चेत् पृथक् गृहीत्वा [9] 'उदुत्यं—चित्र'मितीशानेन्द्रयोर्मध्ये सुसंन्यस्य [10] द्वारेषु वामपार्श्वे कोणेषु च 'इदं विष्णु'रिति हिमवत्पूर्वान् यमाग्न्योर्मध्ये 'सोम ओषधीना'

द्रव्यन्यासप्रकारः

---

1. क. तथैवेति नास्ति 2. ग. इति १६४ खण्डः 3. A. स्तम्भैर्युक्तं 4. क. कदलीपूर्णकुम्भ 5. क तत्राधिके 6. क. तद्वेदिं 7. म. देवानां 8. A. पङ्क्त्यां यथोक्ते 9. अत्र सर्वेषु A. कोशेषु अव्यक्ताक्षरोऽनिर्देश्यः 10. क. द्वारवामेषु.

मित्यङ्कुरान् ऐन्द्राद्यैशानान्तं द्वारदक्षिणपार्श्वेषु कोणेषु च श्रीवत्सादीन् मङ्गलांश्च तत्तत् स्थाने तथैव [1]'इन्द्राविष्णू' इति द्वादश प्रधानान् कलशान् ऐशान्ये पञ्चगव्यमीशानेन्द्रयोर्मध्ये घृतमग्नीन्द्रयोर्मध्ये मधु पावके दधि यमाग्न्योर्मध्ये क्षीरं याम्यनैर्ऋतयोर्मध्ये गन्धोदकं नैर्ऋत्यामक्षतोदकं निर्ऋतिवरुणयोर्मध्ये फलोदकं वरुणवाय्वोरन्तरे कुशोदकं वायव्ये रत्नोदकं वायुसोमयोर्मध्ये जप्योदकं सोमेशानयोर्मध्ये सर्वौषध्युदकम् । तेषां वामपार्श्वे 'स्वादिष्ठ'येति तत्तदुपस्नानार्थकलशान् 'इमास्सुमनस' इति यमनीलयोर्मध्ये बिल्वपत्रादिपुण्यपुष्पाणि वारुणनैर्ऋतयोर्मध्ये [2]'वन्ध्या न एष' इति जातीफलादिचूर्णं वरुणोदानयोर्मध्ये 'ये ते शत'मित्यश्वत्थादिकषायचूर्णं 'वारीश्चतस्र' इति नादेयादि तीर्थतोयं च [3]सोमोदानयोर्मध्ये 'रुद्रमन्य'मिति सिंह्यादिवनौषधीः नीलपङ्क्तीशयोर्मध्ये 'सिनीवा'लीति हारिद्रचूर्णं 'इमे गन्धा'इतीशानसोमयोर्मध्ये हरेणुपूर्वं सर्वगन्धं [4]'नारायणाय विद्महे' इत्यैशान्ये धौतवस्त्रोत्तरीयाभरणयज्ञोपवीतानि पलाशादिमूलगन्धान् जातिहिङ्गुलिकादिधातूंश्च सन्न्यसेत् । प्रणवपूर्वया गायत्र्यैव मृदादिसर्वद्रव्याणां न्यासं केचित् कुर्वन्ति । [5]सर्वाण्येतानि नवैः वस्त्रैः प्रच्छाद्य श्वभ्रस्य द्वितीयवेद्यां प्रागाद्यैशानान्तं जयाद्यप्सरसोऽर्चयेत् ।

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे दैविकवासुदेव-
प्रतिष्ठास्नपनसम्भाराहरणं नाम
**पञ्चाशीतितमोऽध्यायः** [6] ॥

## ॥ अथ षडशीतितमोऽध्यायः ॥

'जयां [7]सुखप्रदां समृद्धिनीं [8]भद्रजा'मिति जयां 'विजयां विशोकां पुण्यां [9]कामनन्दा'मिति विजयां 'विन्दां लाभां प्रमत्तामजेया'मिति विन्दां 'पुष्टिकाममोघवर्तां [10] पुण्यां प्रमत्ता'मिति पुष्टिकां 'नन्दकां

जयाद्यावाहनम्

---

1. क. इदं विष्णुरिति 2. वन्ध्योन एष इति भाष्यपाठः 3. म. सोमेशानयोर्मध्ये 4. क. तत्पुरुषायेत्यैशान्ये 5. पूर्वं तत्र इति क. कोशेषु सर्वाण्येतानि इति म. कोशे च अधिकोंशस्तत्रादौ परिदृश्यते 6. ग. इति १६५ खण्डः 7. म. सुखप्रजां 8. म. भद्रां 9. म. कामन्दां 10. म. मोघवर्ती.

मधुजननीं सुयुक्तां सुभगा'मिति नन्दकां 'कुमुद्वतीं [1]सुवहां सुसम्भरां [2]निर्वृति'मिति कुमुद्वतीं 'उत्पलकां सुगन्धिनीं सर्वमोदां सर्वात्मका'मित्युत्पलकां 'विशोकां धनराशिमक्षताममिता[3] 'मिति विशोकां च क्रमेणाष्टावप्सरसः ।

वेद्यां पङ्क्तौ 'पङ्क्तीशं मित्रं वरदं भूतनायक'मिति पङ्क्तीशं विष्वक्सेनमिन्द्रादिदिग्देवताश्च तत्तत् स्थाने पूर्वोक्तैर्मूर्तिमन्त्रैरभ्यर्च्य देवेशं [4]शयनादादाय श्वभ्रे प्रतिष्ठाप्य मृदादिद्रव्येषु तत्तत् द्रव्यधरान् तदधिदेवांश्चैव [5]चतुर्भिर्मूर्तिमन्त्रैरर्चयेत् । मृत्स्वष्टासु तद्दैवतं हरिणीं पर्वतेष्वग्निं धान्येषु वायुं च पूर्वोक्तैर्मूर्तिमन्त्रैः । अङ्कुरेषु 'तार्क्ष्यं पक्षिरूपं सुपर्णमङ्कुराधिप'मिति तार्क्ष्यं [6]अष्टमङ्गलेष्विन्द्रं पूर्ववत् ।

पञ्चगव्ये 'शिवमीशमव्यक्तं पञ्चगव्य'मिति शिवमेतस्योपस्थाने 'विश्वान्देवान् सर्वान्देवान् [7]विश्वपुत्रान् धर्मसूनुका'निति [8]विश्वेदेवान् घृते 'घृतं सामवेदं वज्रं यज्ञ'मिति सामवेदं तदुपस्थाने 'वत्सरान् वसुसुतान् निधीन् धर्मसूनुका'निति वत्सरान् मधुनि च 'मधु ऋचं सोम क्रतु'मिति ऋग्वेदमुपस्थाने प्राणमपानं व्यानमुदानं समान'मिति प्राणं दध्नि 'यजुः दधि मिश्रमिष्टि'मिति यजुर्वेदमुपस्थाने 'रुद्रानेकादशाधिपान् [9]हरान् कपर्दिन'इति रुद्रान् क्षीरे 'अथर्वाणं पवित्रं क्षीरं पुण्य'मित्यथर्ववेदमुपस्थाने 'अश्विनौ मरुतौ युग्मौ त्वाष्ट्रीपुत्रा'वित्यश्विनौ गन्धोदके 'ऋतून् सहराशीन् गन्धान् तीर्था'निति षड्ऋतूनुपस्थाने 'मरुतो लोकधरान् सप्तसप्तगणान् मरुद्वतीसुता'निति मरुतः अक्षतोदके 'काश्यपं विश्वमूर्ति[10]मक्षतमनन्त'मिति काश्यपमुपस्थाने पीतवर्णं पूर्ववत् फलोदके 'सोमं फलोदकंपुण्यममित'मिति सोममुपस्थाने 'नागराजं सहस्रशीर्षमनन्तं वासुकि'मिति वासुकिं कुशोदके 'मुनीन् तपोधिपान् कुशान [11]पापविनाशना'निति मुनीनुपस्थाने तक्षकं सर्पराजं क्षितिजं [12]धराधर'मिति तक्षकं रत्नोदके 'विष्णुं [13]सर्वव्यापिनं [14]रत्नं

---

1. म. सुसहां . क. निभृति 3. क. अर्थमितां 4. क. शनैरादाय • 5. क. मूर्तिमन्त्रै र्चयेत 6. क. मङ्गलेषु 7. म. विश्वपुण्यान् 8. म. विश्वान् देवान् 9. क. भवान् 10. क. अक्षतं तक्षकं 11. छ. पापविनाशान् 12. छ. धरं ख. धरणिनं 13. क. व्यापिनं 14. ख. रक्तं.

विश्व'मिति विष्णुमुपस्थाने 'गन्धर्वान् रम्यान् स्वरजान् सोमजा'निति गन्धर्वान् जप्योदके 'पवित्रं मन्त्रं जप्यं शुद्ध'मिति सर्वमन्त्रमुपस्थाने 'विद्याधरान् मन्त्रबलान् पुष्पजान् भोगजा'निति विद्याधरान् सर्वौषध्युदके 'आदित्यमण्डजं सूर्यं सर्वौषध' मित्यादित्यमुपस्थाने 'अप्सरसः [1]मुदावहाः भोगवहाः [2]स्वरजा' इत्यप्सरसः ।

पुण्यपुष्पेषु धातारं चूर्णेषु चक्रं कषायेषु वरुणं तीर्थोदकेषु सुब्रह्मण्यं च पूर्ववदेव । ओषधीषु 'शतरुद्रान् ओषधीशान् त्र्यम्बकान् [3]कपालिन' इति रुद्रान् हारिद्रचूर्णे 'सिनीवालीं सुपाणिं पृथुष्टुकां [4]देवेशानी'मिति सिनीवालीं गन्धद्रव्येषु 'इन्द्रं भोगं गन्धं शतक्रतु'मितीन्द्रं स्रोते 'त्वष्टारं रूपजातं निधिजं स्रोताधिप'मिति त्वष्टारं मूलगन्धे ब्रह्माणं धातुषु [5]दुर्गां च पूर्वोक्तमूर्तिमन्त्रैरेव तत्तद्द्रव्येषु तत्तदधिदेवं त्रयोदशविग्रहैरर्चयति [6] । उत्तममध्यमत्रिकेषु श्वभ्रस्य पूर्वे पश्चिमेऽप्यौपासनाग्निं साधयित्वा पौरुषं दौर्गं वैष्णवं तत्तद्द्रव्याधिपमूर्तीर्हुत्वा देवस्य स्नपनमारभेत् ।

अथातः स्नपनं भवति । यजमानो वस्त्रकुण्डलाद्याभरणैः सशिष्यमाचार्यमलङ्कृत्य पूजयेत् । 'दधि क्राव्ण' इति दधिप्राशनं कृत्वा अप आचम्य सोष्णीषोत्तरीयाभरणा भवेयुः । आचार्यो भगवन्तं [7]पूर्ववत् त्रयोदशविग्रहैः पश्चादष्टविग्रहैरर्चयति । श्वभ्रस्य वामे अर्चनार्थं पुष्पादीन् [8]संभृत्य द्रव्यप्रोक्षणार्थमद्भिः पूर्णं सकूर्चं करकं निधाय तज्जलेन तद्द्रव्याणि प्रणवेन प्रोक्ष्यादाय ललाटान्तमुद्धृत्य तद्द्रव्येण देवं त्रिः सकृद्वा प्रदक्षिणं कारयित्वा तत्तन्मन्त्रान्ते च तद्द्रव्यनाम योजयित्वा विष्ण्वादिपञ्चमूर्तिमन्त्रैः स्नापयेत् । पुनः सकृत् प्रदक्षिणं कारयित्वा तद्द्रव्यपात्रं पूर्वस्थाने न्यसेत् । द्रव्यं प्रति निर्माल्यमपोह्याभ्यर्च्य घण्टां ताडयित्वा 'एकाक्षर'मिति मृदा स्नापयेत् । 'विश्वे निमग्न' इति पर्वतेन प्रदक्षिणं कारयित्वा 'प्राणप्रभृति'रिति [9]धान्यैः स्नापयेत् । 'वितत्य बाण'मित्यङ्कुरेणाभ्यर्च्य 'त्वं वज्रभृ'दिति मङ्गलैश्च प्रदक्षिणं कारयेत् ।

1. मुदावहा इति स्थाने B. कोशेषु अमृतजा इति क. कोशेषु मुदजा इति च दृश्यते. 2. ख. सुरजान् छ. सामजान् B. सस्यजाः 3. म. कपालपान् क. कपिलान् 4. म. देवनाभिं क. देवसनाभिं 5. म. रौद्रं 6. ग. इति १६६ खण्डः 7. क. पूर्वं 8. B. संगृह्य 9. म. धान्येन

'वसोः पवित्र'मिति [1]पञ्चगव्येन स्नापयित्वा 'वारीश्चतस्र' इत्युपस्नानेन 'अग्न आया'हीति घृतेन 'अग्निमीळ' इति मधुना 'इषेत्वोर्जे'त्वेति दध्ना 'शन्नो देवी'रिति क्षीरेण 'अभित्वा शूर' इति गन्धोदकेन 'इमा ओषधय' इत्यक्षतोदकेन 'जपन् दत्वानुम'दिति फलोदकेन 'चत्वारि वा'गिति कुशोदकेन [2]'नारायणा'येति रत्नोदकेन पूतस्त'स्येति जप्योदकेन 'चत्वारि शृङ्गा' इति सर्वौषध्युदकेन च संस्नाप्य 'धाता विधा'तेति पुण्यपुष्पैरर्चयेत् ।

'ऋचो यजूं'षीति चूर्णैः संस्नाप्य 'स एष दे'वइति कषायेनोद्वर्तयेत् । 'स सर्ववे'त्तेति तीर्थोदकैः संस्नाप्य [3]'सामैश्च ताङ्ग'मिति वनौषधिभिः संमार्जयेत् । 'अतो देवा'इति हरिद्राचूर्णेन स्नापयेत् । 'त्वं स्त्री'ति सर्वगन्धेन 'आपो हि ष्ठा' इत्युष्णोदकेन संस्नाप्य शुद्धोदकैः संस्नापयेत् । 'मित्रः सुपर्ण' इति प्लोतेन विमृज्य पूर्ववद्वस्त्राद्यैरलङ्कृत्य 'त्वं भूर्भुव' इति मूलगन्धैः संस्पृश्य 'बुद्धिमता'मिति धातुभिरलङ्कृत्य पूर्ववत्पाद्यादिभिरभ्यर्च्य कनिक्रदादिना आलयं प्रदक्षिणीकृत्य [4]आस्थाने वा संस्थाप्याभ्यर्च्य [5]पायसादिभिः प्रभूतं महाहविर्वा यथाशक्ति [6]निवेदयेत् ।

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे जयाद्यर्चनमहास्नपनविधिर्नाम षडशीतितमोऽध्यायः [7] ॥



## ॥ अथ सप्ताशीतितमोऽध्यायः ॥

[8]ध्रुवार्चनायामपि मण्डपे प्रपायां वा मृदादि द्रव्याणि सन्न्यस्यादाय अभ्यन्तरं प्रविश्य तत्रैव [9]देवेशं स्नापयेत् । अथवा औत्सवं बिम्बं तत्पार्श्वे प्रतिष्ठाप्य तत्रैव स्नपनोत्सवादीन् कुर्यात् । ध्रुवार्चायामुत्सवं न कुर्यादित्यन्ये वदन्ति ।

ध्रुवार्चायां विशेषः

---

1. म. पञ्चगव्यैः स्नापयित्वा. 2. क. तत्पुरुषायेति रत्नोदकेन. 3. सामैश्च साङ्गमिति भाष्यपाठः 4. क. अर्चास्थाने वा 5. छ. पायसाद्यं 6. A. हविर्निवेदयेत् 7. ग. इति १६७ खण्डः 8. क. ध्रुवार्चनायां 9. क. देवदेवं.

देवेशस्य स्नपनेनावग्रहदुर्भिक्षव्याध्याधिनाशाद्यशुभाश्च सर्वोपद्रवाश्च नश्यन्ति । तस्माद्भक्त्यैव कुर्यात् [1] ।

स्नपनभेदाः

अथ स्नपनं नवविधम् । मृत्पर्वतधान्याङ्कुराष्टमङ्गलानीति पञ्च प्राग्द्रव्याणि । षोडशांशं कृत्वा तदेकांशं घृतं द्व्यंशं दधि त्र्यंशं क्षीरं [2]चतुरंशं गोमयं षडंशं गोमूत्रमेवमेतैः पञ्चभिः गव्यैर्युक्तं पञ्चगव्यम् । शुद्धं नवनीतं सद्यः समपक्वं सुवर्णाभं घृतं श्रेष्ठम् । अनतीतपञ्चदशाहं वा । [3]पुष्पद्रावणकं फलद्रावणकं वा मधु । तदलाभे नालिकेराम्भो ग्राह्यम् । माक्षिकं वेति केचित् । न शुक्तं दधि । सद्यो दुग्धं क्षीरम् । चन्दनकोष्ठुशीरैलालवङ्गादिगन्धैः [4]मिश्रं गन्धोदकम्। यवसर्षप[5]माषैर्युक्तं व्रीहिभिस्तण्डुलैर्वा अक्षतमक्षतेन युक्तमक्षतोदकम् । कदलीचूतपनसनालिकेरनारङ्गमातुलुङ्गो[6]त्तममौञ्जकामरभव्यकुन्दादीनां फलैः यथालाभैर्युक्तं फलोदकम् । कुशैः सहितं कुशोदकम् । पद्मरागपुष्यकान्तवज्रवैदूर्यमौक्तिकप्रवालमरतक[7]गोमेदेन्द्रनीलानीति नवैतानि रत्नानि । पूर्वाणि पञ्चरत्नानि नवभिः पञ्चभिर्वा रत्नैर्युक्तं रत्नोदकम् । दर्भैः जलं स्पृष्ट्वा आपो हिष्ठामयादीन् [8]त्रीन् मन्त्रानावर्त्य अष्टोत्तरशतं जप्त्वा अभिमन्त्रितं जप्योदकम् । ओषध्यः फलपाकान्ताः प्रियङ्गुसर्षपमुद्गाद्याः ताभिः सर्वाभिः मिश्रितं सर्वौषध्युदकमित्येतानि प्रधानद्रव्याणि । एतैः प्रधानद्रव्यैः सम्पूर्णाः कलशाः प्रधानाः । तत्प्रधानानन्तरस्नपनार्थं शुद्धोदकपूर्णाः तथोपस्नानाः । पुण्यपुष्पजातीफलादिचूर्णकषायचूर्णतीर्थोदकवनौषधिहारिद्रचूर्णसर्वगन्धचूर्णमूलगन्धप्लोतवस्त्रोत्तरीयाभरणयज्ञोपवीतधातव इति द्वादशैतान्यनुद्रव्याणि ।

द्रव्यलक्षणप्रमाणादिः

प्राग्द्रव्यैरनुद्रव्यैरपि विना द्वादशप्रधानैः द्वादशोपस्नानैः चतुर्विंशतिकलशैः स्नपनमधमाधमम् । नादेयादिमृदोऽष्टौ सौवर्णे पृथगेकस्मिन्नेकस्मिञ्छरावे गृह्णीयात् । तथा धान्यान्यङ्कुरांश्च पूर्ववत् । द्वादशप्रधानाः कलशाः षट्त्रिंशदुपस्नानाः पुण्यपुष्पाण्यपि वा शरावे तथा जातीफलादिचूर्णमश्वत्थादिकषायचूर्णं शरावे गृह्णीयात् ।

---

1. च. इति १६८ खण्डः. 2. A चतुर्थांशं. 3. म. पुष्पद्राविणकं फलद्राविणकं वा. 4. क. मिश्रितं. 5. म. माषैर्युक्तो व्रीहिस्तण्डुलो वा अक्षतं. 6. क. उत्तमकुञ्जिकामरकुरुन्दादीनां.(?) 7. क. गोमेधिक. 8. क. मन्त्रानित्येव.

तीर्थोदकानि चतुर्षु शङ्खेषु गोशृङ्गेषु शरावेषु वा तथा श्रीवेष्टकादि [1]चूर्णाद्यानि शरावेषु पृथक्पृथगेव ग्राह्याणि [2] । तथैवं प्राग्द्रव्यैश्च सहितमष्टचत्वारिंशत्कलशैः स्नपनमधममध्यमम् [3] ।

एतद्द्विगुणानि प्राग्द्रव्याण्यनुद्रव्याणि च पञ्चगव्यादिद्रव्यैः द्वादशभिः पूर्णाः प्रधानाः कलशाः प्रत्येकं चत्वारश्चत्वारः तथैव तदुपस्नानाश्चेत्युत्तमम् [4] । त्रयस्त्रयः प्रधानाः पञ्चपञ्चोपस्नानाश्चेति मध्यमम् । द्वौ द्वौ प्रधानौ षट्षडुपस्नानाश्चेत्यधमम् ।

एकैकः प्रधानः सप्तसप्तोपस्नानाश्चेति केचिदिच्छन्ति ।

चतुरः तीर्थोदकपूर्णाः हारिद्रचूर्णार्थाः तदुपस्नानार्था[5]श्चाष्टौ प्रधानवत् कलशाः [6]प्राग्द्रव्यैरनुद्रव्यैश्च सहितमेवं शताष्टकलशैः स्नपनमधमोत्तमम् । शताष्टकाद्द्विगुणं मध्यमाधमं पञ्चगुणं मध्यमोत्तमं षड्गुणमुत्तमाधममष्टगुणमुत्तममध्यमं दशगुणमुत्तमोत्तमम् । सहस्रकलशैः स्नपनमुत्तमोत्तममिति भृगुः ।

कलशानां न्यासो यावत्तावद्विस्तारायतां पङ्क्तिं तथैव परितः कुर्यात् । शताष्टकद्वयाधिके द्वे तिस्रो वा पङ्क्तीः[7] तथैव परितः कुर्यादित्येके । तत्तत्पङ्क्तौ पूर्ववद्यथोक्तस्थाने सन्न्यस्य मृदादिद्रव्याणि तत्क्रमेणादाय तत्तन्मन्त्रैः स्नापयेत् ॥

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे नवविधस्नपननिर्णयो नाम सप्ताशीतितमोऽध्यायः [8] ॥

---

## ॥ अथाष्टाशीतितमोऽध्यायः ॥

अथोत्सवं व्याख्यास्यामः । कालोत्सवः श्रद्धोत्सवो निमित्तोत्सव इति स त्रिविधो भवति । प्रतिसंवत्सरं [9]तत्तन्मासे तत्तद्दिने [10]नित्यं संकल्पनेन यः क्रियते स कालोत्सवः । श्रद्धायामुत्पन्नायां यथेष्टमासे यः क्रियते सोऽयं श्रद्धोत्सवः । अवग्रहदुर्भिक्षाद्यशुभशान्त्यर्थं कृतो निमित्तोत्सवः । तेषु

त्रिविधः उत्सवः

---

1. क. चूर्णानि. 2. क. सर्वगन्धचूर्णं शरावे गृह्णीयात्. 3. इति १६९ खण्डः. 4. क. इत्यधमोत्तमम्. 5. क. पञ्चाष्टौ. 6. म. प्राग्द्रव्यैः सहितं. 7 छ. पङ्क्तीः कुर्यादित्येव. 8. ग. इति १७० खण्डः 9. क. तन्मासे तद्दिने. 10. ग. नित्यत्वसंकल्पनेन.

कालोत्सवो मुख्यः । तस्मादयने विषुवश्रवणपर्वद्वादशीमासर्क्षप्रतिष्ठादिनयजमान-जन्मर्क्षाणामेकस्मिन् राज्ञो जन्मर्क्षे वा अवभृथं सङ्कल्प्योत्सवमारभेत् ।

त्रिंशद्दिनमुत्तमोत्तमं पञ्चविंशतिदिनमुत्तममध्यममेकविंशतिदिनमुत्तमाधमं [1]पञ्च-दशाहं मध्यमोत्तमं[2] द्वादशाहं मध्यममध्यमं नवाहं मध्यमाधमं सप्ताह-मधमोत्तमं पञ्चाहमधममध्यमं त्र्यहमेकाहं वा अधमाधममिति नवधा भवति । पुनर्नवधाभेदः

एषामेकाहं विना तदुत्सवाहानि त्रिगुणीकृत्य तत्पूर्वेऽह्नि ध्वजारोहणं कुर्यात् । तत्पूर्वे अङ्कुरानर्पयित्वा ब्राह्मणो यजमानश्चेत् वेणुं क्षत्रियो जातिं वैश्यः चम्पकं शूद्रः कारयिता चेत् राजानं सङ्कल्प्य जातिमेव क्रमुकं वा सर्वेषां क्रमुकमेव वा दण्डमशनिहतवातपतितस्वयंशीर्णसुषिरकीटकोटरवक्र-वर्जितं सङ्गृह्य विमानस्य समं पादहीनमर्धं वा आयतं [3]नातिस्थूलं नातिकृशं तस्याग्रा-दधो द्वियमे ततः पञ्चयमे वाऽष्टयमे[4] च यष्ट्याधारं [5]यमायामार्धविस्तारं मध्यच्छिद्र-युतं यज्ञीयैः वृक्षैः कृत्वा सुदृढं योजयित्वा खण्डस्फुटितवर्जितं कार्पासिकं चतुस्ता-लविस्तृतं द्वादशदशाष्टसप्ततालानामन्यतमायतं विमानद्वारसममायतार्धविस्तृतं वा नवं ध्वजपटं सङ्गृह्य ध्वजाग्रा[6] द्वितालायाममग्रांशात्पार्श्वयोः क्षीणं रज्ज्वाधारयुतं कृत्वा अधः पुच्छौ द्वौ द्वितालायतौ मध्ये क्रमादाप्रान्तं क्षीणौ च कृत्वा अग्रे-णाग्रं पुच्छेन पुच्छं योजयित्वा अग्रादधः[7]पुच्छयोरूर्ध्वे च यष्टिं तिर्यक् संयोज्य 'स्वस्तिदां' इति ध्वजपटं कारयेत् । तन्मध्ये स्वस्तिकासनेन वीरास-नेन वा आसीनं पादं वाममाकुञ्च्य दक्षिणं प्रसार्य आकाशमारोहन्तं वा पक्षसंयुतं द्विभुजं प्राञ्जलिं सुमुखाख्योरगारूढदक्षिणस्कन्धं नवतालमानेन गरुडं पञ्चवर्णैः समा-लेख्य दक्षिणवामयोः चक्रशङ्खौ द्वौ चामरावुपरि छत्रं ....... त तत् ध्वजमद्भिः प्रोक्ष्य एकविंशतियमायततालपरीणाहमूले बेणुयुतं वेणुं (?) सङ्गृह्य तद्यष्ट्यामग्रादधः त्रियमे 'स्वस्ति दा' इति ध्वजं बध्नीयात् । ध्वजलक्षणम् ध्वजपटः

---

1. इत आरभ्य. घ. कोशे महान् ग्रन्थपातो दृश्यते. 2. म. दशाहं. 3. इदं पदं म. कोशे नास्ति. 4. क. ततोऽष्ट यमे. 5. क. यमायाममर्धविस्तारं. 6. ऊर्ध्वाग्रं तत्पटं चेतुर्धा कृत्वा एकांशं द्वितालायामं वा अग्रं इति तत्र क. कोशपाठः 7. क. त्रियमे स्वस्तिदा इति.

भेरीपूजाप्रक्रमः

देवालयाभिमुखे मण्डपं कूटं वा कृत्वा आलिप्य तण्डुलैः व्रीहिभिर्वा त्रिवेदिसहितानि पीठानि कृत्वा प्राच्यां पीठे ध्वजं पश्चिमे चक्रमुत्तरे विष्वक्सेनं संस्थाप्य ध्वजे गरुडमावाह्य सप्तविंशतिविग्रहैरभ्यर्च्य मौद्गिकं हविर्निवेद्य तथा चक्रशान्तावभ्यर्च्य हविर्निवेद्य पुण्याहं वाचयित्वा दक्षिणे धान्यराशौ न्यस्तभेर्यां 'नन्दीशं महाभुजं रुद्रप्रियं भूतेश' मिति नन्दीशमावाह्याभ्यर्चयेत्[1] । ततो यजमानो गुरुं वस्त्रोत्तरीयाभरणाद्यैः पूजयेत् ।

बलिप्रकारः

स गुरुः कटाहे बलिद्रव्यैः युक्तमन्नं प्रक्षिप्य अग्रतो ध्वजपताकं ततोऽनु भेरीपटहादीनि वाद्यानि धूपदीपादीन् बलिद्रव्यं ततोऽनुछत्रपिञ्छचामरबर्हिणाद्यैः परिवृतः चक्रं ध्वजं शान्तं च विमानं ग्रामं च प्रदक्षिणं नयेत् । द्वारपालविमानपाललोकपालानपायिभ्यश्च तत्तद्देशे बलिं निर्वाप्य[2] ग्रामे सन्धौ सन्धौ यथोक्तं बलिं निर्वाप्य प्राञ्जलिः देवं ध्यायन् एवं ब्रूयात्[3] ।

'प्रीयतां[4] सर्वलोकेशः श्रीवत्सकृतलक्षणः ।
भृत्यैश्च[5] परिवारैश्चाऽप्यन्यै र्देवगणैः सह ॥

देवताह्वानम्

देवेश भक्तवत्सल भक्तैरस्माभिः कृतमुत्सवं प्रतिगृह्णीष्व अज्ञानात् न्यूनानपचारांश्च क्षमस्व' इति देवेशं प्रार्थयेत् । 'अष्टौ लोकपालाः त्रयस्त्रिंशद्देवाः नवद्वयगणाः सर्वेऽन्यदेवाः तद्देवपत्न्यश्च स्कन्दो विघ्नज्येष्ठारोहिणीगणाः[6] मातृगणाः सर्वेप्यृषयः तत्पत्न्यश्च विष्णुभूताश्चान्ये विष्णुलोकगताः ब्रह्मलोक-रुद्रलोक-लोकान्तरस्थाः देवाः सिद्धविद्याधरगरुडगन्धर्वकिन्नरकिंपुरुषाः चारणा भूता यक्षा नागा राक्षसाः बलिर्वैरोचनिः पूता शृङ्गी पूतना चरकी देवतारिः पिशाचाः पिशाच्यश्चेति सर्वेऽपि स्वैर्गणैः भृत्यैः परिवारैश्च सहैव विष्णुयागार्थमागच्छन्तु । देवेशप्रियकाम्यया समागताः सर्वेऽप्यर्पितं बलिं समादाय भुञ्जन्तु । ते यूयं तद्भुक्त्वा परं हर्षमवाप्स्यथ' इति[7] मध्यादि परितश्चाष्टदिक्षु चोच्चार्योद्घोष्य भेर्यादिवाद्यैश्च घोषयेत् ।

1. घ. कोशः पुनः आरभ्यते. 2. क. ग्रामेऽपि दिक्ष्वष्टसु. 3. ग. इति १७१ खण्डः 4. छ. संबुध्यन्तः . 5. म. भृत्यैः परिवारैश्चान्यदेवैः सह. 6. सर्वपदं - घ कोशे न दृश्यते. 7. क. तत्संधिषूच्चार्योद्घोष्य.

अथवा दिग्देवतासूक्तान्युच्चार्य सर्वागमनार्थं वाद्यघोषणमेव कारयेत् । एवं बलिं निर्वाप्याघोष्य ग्रामं प्रदक्षिणं कारयित्वा यूथाधिपपृष्ठे चतुस्तालं व्यपोह्य[1] सप्ततालं पञ्चतालं वा यथार्हमवनतं खनित्वा मध्ये प्राग्दक्षिणपश्चिमोत्तरेषु मणिवज्रवैदूर्यमौक्तिकप्रवालांस्तत्तन्मन्त्रैः सन्न्यस्य ध्वजदण्डं प्रक्षाल्य ध्वजयष्टिं [2]यष्ट्याधारेषु योजयित्वा दर्भमाल्या दण्डं वाद्यघोषणयुतं ध्वजाग्रयष्टिं यत्र विमानं तद्दिगन्तमेतन्मन्त्रेण स्थापयेत् । तन्मूले प्रतिदिक् पादविस्तारोन्नतं त्रिवेदिसहितं पीठं कृत्वा पुण्याहान्ते ध्वजे देवमभ्यर्च्य मौद्गिकं हविर्निवेदयेत् । ध्वजावरोहणं यावत्तावद्देवं सप्तविंशतिविग्रहैः नित्यमभ्यर्च्य हविर्निवेदयेत् ।

ध्वजारोहणम्

अथवा [3]आपद्युत्सवे प्रथमेऽहनि सायं ध्वजमारोप्याऽघोष्य [4]सद्य एवोत्सवमारभेत् । एकाहोत्सवे ध्वजारोहणं न विधीयते । ध्वजे समारोपिते तद्ग्रामस्थाः तदुत्सवस्यावभृथात्पूर्वं ग्रामान्तरं न गच्छेयुः । [5]गतानां महाव्यधिर्भविष्यति ।

इति श्रीवैखानसे काश्यपप्रोक्तायां संहितायां ज्ञानकाण्डे उत्सवघोषणं नाम

**अष्टाशीतितमोऽध्यायः[6] ॥**



## ॥ अथैकोननवतितमोऽध्यायः ॥

अथोर्ध्वं शिबिका [7]रथयन्त्रडोलादिनानाविधयन्त्रराङ्गान् मालादीपशूलदीपहस्तदीपान् बहु सङ्गृह्य भेरीपटहकाहल[8]प्रदुरवमर्दलगोमुखताल झर्झरीवल्लरीवञ्जुलजयघण्टिका शङ्खवीणावेणुमृदङ्गपणवभाण्डादिवाद्यानि सङ्गृह्य तद्वादकांश्च नर्तकगायकांश्च भक्तान् परिचारकांश्चाहूय छत्रचामरबर्हिणतालवृन्तध्वजपताकादीनलङ्कारान् सर्वानपि अशक्तश्चेत् परिच्छदान् (?) हविर्द्रव्याणि सम्भारानपि सम्भृत्य उत्सवादिदिने देवालयं संमार्ज्य गोमयेनोपलिप्य छत्रचामरपद्मोत्पलादिकुसुमानि पूर्णकुम्भपालिकादीनि गजाश्वसिंहचक्रवाकहंसध्वजपताककदली-

वीथीभ्रमणप्रकारः

1. A. व्यपोह्यावटं खनित्वा. 2. क. यष्ट्याधारे अवटे. ३. क. यद्युत्सवे. 4. सद्य इति B कोशेषु न दृश्यते. 5. क. गतवतां घ. गतवतां नाम. 6. ग. इति १७२ खण्डः. 7. क. रङ्गगरुड. 8. क. प्रदमर्दरटर्कर. B. टङ्कर.

क्रमुकादिरूपाणि पैष्टिकादिपञ्चवर्णैः कारयित्वा चालयं सर्वत्र धूपदीपैश्च वितानध्वजदर्भमालास्तम्भवेष्टनपुष्पदामाद्यलङ्कारैरलङ्कृत्य द्वारेषु क्रमुकपूर्णकुम्भाङ्कुरान् सन्न्यस्य ग्रामवीथीः संशोध्याभ्युक्ष्य कदलीक्रमुकपूर्णकुम्भाङ्कुरध्वजादिभिरलङ्कृत्य तद्ग्रामवासिनो जना अप्याभरणगन्धमाल्यैरलङ्कुर्युः ।

उत्सवे प्रथमेऽहनि साये विष्वक्सेनं चक्रं च सप्तविंशत्युपचारैरभ्यर्च्य अलङ्कृत्य यानं वाहनं वा समारोप्य छत्रपिञ्छचामरादियुतं वस्त्रमाल्यैरलङ्कृतं खनित्रं च पालिकाछिद्रकुम्भशरावान् ध्वजपताकादींश्च पुरस्कृत्य

अवभृथाङ्कुरम्

वाद्यघोषसहितं गत्वा अवभृथाङ्कुरार्पणार्थं मृदं गृह्णीयात् । [1]ग्रामाद्वालयाद्वा प्राच्यां चेत्सर्वसमृद्धिः आग्नेय्यां धान्यनाशः याम्यां प्राणिनाशः नैर्ऋत्यां महाव्याधिः वारुण्यामनावृष्टिः वायव्यां राजकोपः सौ-

मृद्ग्रहणम्

म्यायां पुत्रसमृद्धिः ऐशान्यां सर्वसुखावाप्तिः[2] । [3]तस्मादैशान्यां सौम्यायां वा देशं गत्वा शुद्धे मनोरमे गोचर्ममात्रमुपलिप्य चतुरङ्गुलमात्रमृदमपोह्य ऊर्ध्ववक्त्रामैशान्ये न्यस्तमौलिकां भूदेवीं नवार्धतालमानेनोपकल्प्य [4] मूर्तिमन्त्रैरभ्यर्च्य पुण्याहं वाचयित्वा अनुज्ञाप्य ललाटे बाह्वोः वक्षसि स्तनयोर्वा [5]उदङ्मुखः प्राङ्मुखो वा 'त्वां खना' मीति मृदं सौवर्णे राजते ताम्रे कांस्ये मृण्मये वा पात्रे गृहीत्वा प्रदक्षिणं आलयं प्रविश्योत्तरे पूर्वस्मिन् वा सन्न्यस्य तीर्थदिनात्पूर्वं नवमे सप्तमे पञ्चमे त्र्यहे वा रात्रौ सुमुहूर्ते पूर्वोक्तेन विधिनाङ्कुरानर्पयेत् ।

अथ प्रदोषे यजमानो गुरुमभिपूज्य देवेशस्य विशेषपूजोत्सवं कारयेत् । देवेशं संस्नाप्य प्रभूतं हविः निवेद्य देवीभ्यामर्चकमुनिभ्यां ब्रह्मेशानाभ्यां गरुडचक्रविष्वक्सेनेभ्यश्च अन्यपरिवार-

विशेषपूजा

देवानां च [6]शक्तश्चेद्धविर्निवेदयेत् । तद्दक्षिणेऽग्निकुण्डे अग्निं परिषिच्य वैष्णवं विष्णुसूक्तं मूर्तिमन्त्रं चाज्येन देवेशाय हुत्वा तद्दिनाधिपमन्त्रपूर्वं तदालयगतपरिषद्देवेभ्यश्च सर्वेभ्यश्च [7]मूर्तिमन्त्रैः हुत्वा आज्यमिश्रेण चरुणा च तथैव जुहुयात् ।

---

1. क, ग्रामादित्येव. 2. B. सर्वदुःखनिवृत्तिः । 3. फ. तस्मादैन्द्र्यामैशान्यां वा. 4. क- उपलिप्य. 5. क. उदङ्मुखः प्राङ्मुखो वेति नास्ति, स्तनयोर्वोदरे वा इत्येव. 6. ग. शक्तिश्चेत् । 7. ग. चतुर्मूर्तिमन्त्रैः

द्रोणैः द्रोणार्धैः आढकैर्वा तण्डुलैः पक्कमन्नं कटाहे [1]प्रक्षिप्य मुद्गनिष्पावकुलुत्थतिलतिल्वैः पक्वैरपूपैः लाजैश्च युक्तं कृत्वा तद्बलिद्रव्यं तोयपुष्पगन्धधूपदीपाक्षतांश्च सङ्गृह्य चक्रशान्तगरुडान् बलिं च क्रमेण नीत्वा एतेषां बिम्बाभावे दारुणा कृत्वा तदलाभे तत्तन्मूर्तिमन्त्रैः पालेपुराध्य नयेत् । केवलान्नबलिं वा नयेत् । द्वारपालादितदालयगतदेवेभ्यो बलिं निर्वाप्य ग्रामेऽप्यष्टदिक्सन्धौ तद्दिग्देवलोकपालेभ्यो देवेभ्यो भूतेभ्यो [2]नागेभ्यो राक्षसेभ्यो वैरोचनगणेभ्यश्च मध्ये प्रागाद्यष्टदिक्षु च तत्तन्नाम्नानमोऽन्तेन तोयपुष्पगन्धधूपदीपाक्षततोयादि दत्वा बलिं निर्वाप्य तोयं दद्यात् । पूर्वं तोयं ततः पुष्पं बलिमन्ते तोयं दद्यादिति । एतद्बलिं दत्वा [3]देवालयेऽत्रागतास्ते वैष्णवं बलिं [4]भुंजन्तां [5]अमृतं यथेष्टं सगणाः भवन्तो भुञ्जन्तु ' । इत्युक्त्वा प्रदक्षिणं गच्छेत् । भूतेभ्यो यक्षेभ्यो राक्षसेभ्यो नागेभ्यः पिशाचेभ्यः सर्वभूतेभ्य ' इत्युक्त्वा प्राग्दक्षिणमध्यमोत्तराकाशेषु यथाक्रमेण [6]बलिं दद्यादित्यन्ये । ग्रामसन्धिषु सर्वत्रैवं बलिं निर्वाप्य आलयं प्रविश्य भूतपीठे बलिशेषं निर्वपेत् [7]।

बलिः

अथौत्सवं बिम्बं तदभावे कौतुकं वा कौशेयाद्यैः श्वेतपीतकृष्णवर्णैः वस्त्रैः किरीटकेयूरहारप्रलम्बयज्ञोपवीतकटकाङ्गुलीयकमकरकुण्डलकटिसूत्रोदरबन्धनाद्यैः सौवर्णैः मुक्तामणिमयैराभरणैः सुगन्धैः पुष्पमाल्यैः गन्धैरप्यलङ्कृत्य ' वेदाह ' मिति देवमुद्धृत्य शकुनसूक्तेन हस्ताभ्यां नीत्वा यानमारोप्य प्रभामण्डलमप्यलङ्कृत्य योजयेत् । देवेशेन देव्यावपि समारोपयेदिति केचित् । तत्रैव पाद्याद्यैरभ्यर्च्य मुखवासं दत्वा अग्रतो ध्वजपताकान् ततो यन्त्वरङ्गान् सर्ववाद्यानि गायकान् नर्तकान् धूपदीपानपि क्रमेणैव गमयेत् । ततो देवेशं [8]रथे छत्रैः पिञ्छैः चामरैश्च बर्हिणैस्तालवृन्तैः अन्यैरलङ्कारैः सौवर्णैः नानाविधाकारैः परिच्छदैश्च परिवृतं नीत्वा आलयं प्रदक्षिणीकृत्य शनैः ग्रामं च सर्ववाद्यघोषनृत्तगेयजयशब्दैः स्तोत्रध्वनियुतं प्रदक्षिणं

वीथीभ्रमणम्

---

1. क. निक्षिप्य. 2. B म. नागमुख्येभ्यः यक्षेभ्यः पिशाचेभ्यः सर्वभूतेभ्यः । 3. क. देवयात्रागताः । घ देवयात्रस्थाः तैः B ते. 4. भूतान्तं । 5 घ. तदमृतं. क. तदमृतः । 6. म. सलिलं । 7. ग. इति ७३ खण्डः । 8. क. शिबिकायां.

कारयेत् । यानस्थं देवं मुखवासफलादीन्यपक्वानि भक्ष्याणि च आमन्त्रकं निवेदये-द्ब्राह्मणादीनाम् [1] ।

ग्रामादीनेवं प्रदक्षिणीकृत्य आलयं प्रविश्य आस्थानमण्डपे संस्थाप्य नृत्तगेयाद्यैश्च राजवदुपचारैः सम्पूज्य अर्चनोक्तेन स्नपनोक्तेन वा क्रमेण संस्नाप्य प्रभूतं हविः निवेदयेत् । यावदवभृथं तावदन्यदिनेषु नित्यमेवं सायं प्रातरुत्सव-माचरेत् । तदर्थमागतान् सर्वानपि भोजयेत् [2] ।

प्रथमं ब्राह्मं द्वितीयमार्षं तृतीयं रौद्रं चतुर्थं वासवं पञ्चमं सौम्यं षष्ठं वैष्णवं सप्तमं सर्वदैवत्यमष्टमं याम्यं नवमं वारुणं दिनम् । तस्मात् तद्दिना-

भूततर्पणम्
उत्सवदैवत्यानि

धिपदैवत्यमन्त्रपूर्वं सन्ध्याधिपदैवत्यं च । प्रातः सन्ध्याधिपा इन्द्राणी सायमीशाना वारुणी । एवं सन्ध्याधिपदैवत्ययुक्तं परिष-देवानां मूर्तिहोमं जुहुयात् । दशमादि[3]त्रिंशद्दिनान्तानां सूर्याग्निकुबेरकुमार-वायुविष्णुप्रजापतिबृहस्पतिगरुडदुर्गाचक्रनिर्ऋतिश्रीमहीविष्वक्सेनपाञ्चजन्या[4]श्विनीविश्वे-देवाग्नीषोम[5]पितर इत्येताः यथाक्रमेण दिनानामधिदेवाः । तस्माद्दिनदैवत्यपूर्वमेव होतव्यमिति । एतेषु अवभृथदिने सर्वदैवत्यं होतव्यमिति केचित् ॥

तीर्थदिनात्पूर्वदिने मध्याह्ने पूजान्ते देवं प्रणम्य कक्ष्याक्षुरिकायुतनाना-विधोपायनैरलङ्कृत्य अथवा प्रथमप्रादुर्भावार्चितं बिम्बं वालङ्कृत्य यानमारोप्य मृग-

मृगयोत्सवः ।

योचितसम्भारैः सम्भृत्याजवानरशार्दूलादिभिरन्यैः विलोकितावनानि परिवृत्य शीघ्रं नाययित्वा श्रीदेवीं वा अलंकृत्यार्चेन्त ( ? ) शिबिकायामारोप्य श्रीभूमीपरिवृतदेवस्यानुनयेत् । प्रदक्षिणक्रमेण यथा यथैवान-यित्वा आलयं प्रविश्य तद्रात्रौ पूर्ववब्दल्युत्सवहुतान् पूर्ववत्कारयेत् ।

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे उत्सवसम्भाराहरणाद्युत्सवदैवत्यनिर्णयो नाम एकोननवतितमोऽध्यायः [6] ॥

---

1. क. अन्यस्मादन्यानि च म. अन्नादन्यानि पक्वानि च इत्यधिकं परिदृश्यते । 2. ग. इति १७४ खुण्डः । 3. क. द्वात्रिंशत् । 4. क. भूत B भूताश्वि । 5. क. पितसर्वदेवाः । 6. ग. इति १७५ खण्डः ।

## ॥ अथ नवतितमोऽध्यायः ॥

तीर्थदिनात्पूर्वरात्रावुत्सवान्ते देवेशमभ्यर्च्य हविर्निवेद्य चक्रं च ग्राममालयं वा प्रदक्षिणं कारयित्वा चक्रं तीर्थजले संस्नाप्य आलयं प्रविश्य दक्षिणपार्श्वे [1]भगवतः संस्थाप्य पुण्याहं वाचयित्वा प्रतिसरां बद्ध्वा पूर्ववच्छयने देवेशं शाययित्वा नृत्तगेयाभ्यां रात्रिशेषं नयेत् । प्रभाते स्नात्वा देवमुत्थाप्य त्रयोदशोपचारैरर्चयेत्[2] ॥

शयनाधिवासः

यस्य देवस्य यदर्थं प्रतिसराबन्धनं कृतं तत्समाप्त्यन्तं तावत्तस्य हविर्निवेदनं प्रतिषिद्धम् । तदालयगतदेवानां सर्वेषामित्येके ॥

देवेशं तथैवालङ्कृत्य प्रातः पूर्ववत्प्रदक्षिणं कारयित्वा आलयं प्रविश्य आस्थानमण्डपे संस्थाप्य विमानाङ्कणे गोमयेनोपलिप्य तत्र उलूखलमुसलौ सन्न्यस्य तयोः ब्रह्मेशानावभ्यर्च्य [1] हरिद्रामादाय प्रोक्ष्य तस्यां लक्ष्मीमावाह्य 'श्रिये जात[3] इत्युलूखले हरिद्रां प्रक्षिप्य आचार्यः अतोदेवादिना पेषयित्वा तच्चूर्णैः द्वादशाष्टौ चतुरो द्वावेकं वा कलशमापूर्य अग्रे निधाय सिनीवालीं तस्मिन्नाराध्य तच्चूर्णेन देवेशं संस्नापयेत् । तच्चूर्णं यश्शिरसि विन्यसेत् तस्याशुभानि नश्यन्ति ॥

चूर्णोत्सवः

मध्याह्ने ततो देवेशं चक्रं च ग्रामं प्रदक्षिणं कारयित्वा समुद्रं नदीं तटाकं [4]योजनादर्वाक् न गच्छेत् । अथवा विष्ण्वालयसमीपस्थं तोयं तस्य पादावसेचनात् गङ्गाजलसमं तस्मात्तत्र वा तीरे देवेशं तत्प्रमुखे चक्रं च संस्थाप्य अग्रे पञ्चकलशान् जलैरापूर्य मध्यप्राग्दक्षिणपश्चिमोत्तरेषु सन्न्यस्य तेषु मृत्कुशपुष्पगन्धाक्षतानि यथाक्रमेण प्रक्षिप्य देवेशमभ्यर्च्य स्नपनोक्तमन्त्रैरेव तत्तत्कलशाम्भोभिः देवेशमभ्युक्ष्य तच्छेष[5]भावेन चक्रं च संस्नापयेत् । ततो देवेशं चक्रं च जलेऽपि मज्जयेत् । चक्रमेव वा । तत्तीर्थतोये स्नाताः ते सर्वेऽपि सर्वपापैः प्रमुच्यन्ते । अथ देवेशं पूर्ववद्यानमारोप्य देवालयं प्रविशेत् ॥

अवभृथप्रकारः

---

1. B भगवन्तं । 2. क. अभ्यर्चयेत् । 3. इत आरभ्य पेषयित्वेत्यन्तं B. कोशेषु नास्ति. 4. कं. क्रोशादर्वाक् गच्छेत् । 5. ग. जलेन ।

अवभृथं दिवैव कुर्यात् । रात्रावुदकस्याशुचिभावात् महान् दोषो भवेत् ।

एकाहिकोत्सवे च पूर्वरात्रौ विशेषपूजान्ते प्रतिसरां बद्ध्वा पुनस्तदहि मध्याह्ने विना हविर्निवेदनं होमं च आज्येनैव हुत्वा पूर्ववद्बलिं निर्वाप्य देवं यानमारोप्य तदा सकृदेव ग्रामं प्रदक्षिणं कारयित्वा पूर्ववच्चूर्णं संस्कृत्य स्नाप्य तीर्थे निमज्ज्य अवभृथं कुर्यात्[1] ।

ऐकाहिकोत्सवः

ध्वजारोहणाङ्कुरार्पणहविर्निवेदनहोमबलिप्रदानैश्च विना वा कारयेदिति केचित् ।

तदुत्सवान्ते स्नपनोक्तक्रमेण स्नपनं कृत्वा यथाशक्ति महाहविर्निवेद्य एलातक्कोलादिमुखवासं च निवेदयेत् ।

ततो यजमानो गुरवे सुवर्णपशुभूम्यादि दक्षिणां दत्वा परिचारकादीनां सर्वेषां यथाशक्ति दक्षिणां च दद्यात् ।

दक्षिणादानम्

देवेशं स्वस्थाने संस्थाप्य विशेषपूजां कृत्वा अष्टाक्षरेण पुष्पाञ्जलिं [2]दत्वा प्रणम्य वैष्णवैः ऋग्यजुःसामाथर्वभिः संस्तूय 'स्वामिन् । देवेश ! उत्सवाध्वरे प्रमादादप्रमादाद्वा प्रच्युतं न्यूनं [3]तत्संपूर्णमित्यनुगृहाण प्रसी' देति दण्डप्रणामं कुर्यात् ।

अपराधक्षापणम्

अथ ध्वजदेवमभ्यर्च्य [4]हविर्निवेद्य चक्रादीन् विना बलिद्रव्याणि गृहीत्वा आलये ग्रामे तत्सन्धिषु शून्यालये चैत्यवृक्षे जलाशयसभास्थान-[5]गोष्ठान्यदेवागारादिषु बलिं निर्वाप्य स्नात्वा आलयं प्रविश्य ध्वजमासाद्य,

ध्वजावरोहणम्

'उत्सवेऽस्मिन् [6]समायाताः सर्वे यान्तु यथाऽगताः ।
समाप्त उत्सवोऽद्यात्र ध्वजोऽयमवरोप्यते' ॥

इत्यानम्य ध्वजदेवं विसर्जयित्वा ध्वजमवरोपयेत् । अथवा तद्दिनादूर्ध्वं त्र्यहे रात्रौ वा ध्वजमवरोपयेत् । पौराणिकेषु पर्वतवनाश्रयवापीवेलासागरतीरस्थे

1. ग. इति १७६ खण्डः। 2. क. दद्यादानम्य. 3. क. यत्तत्संपूर्ण. म. तत्सर्वं संपूर्णं 4. क. बलिं. 5. क. गोष्ठागार. 6. क. सामा हूताः B समाहूयन्ते. छ. उत्सवेऽस्मिन् ये समाहूताः A ते सर्वे यान्तु यथागतम् । समाप्तोऽप्युत्सवोयात्र.

च वास्तुरहिते देशे चालये देवस्योत्सवमिच्छतां बल्युत्सवादींस्तदालयं परितःकुर्यात्।

एतदुत्सवेन देवेशः सुप्रीतो भवेत् । अनेनैव गोब्राह्मणादिचातुर्वर्ण्य-समृद्धिः सस्यविवर्धनं मङ्गल्यं सर्वसम्पत्करमशुभनाशनं ग्रामादि-शान्तिः सर्वकामाप्तिश्च भवन्ति । [1]एतेन सर्वे देवाश्च प्रीता भवेयुः । तस्माद्विष्णोरुत्सवं भक्त्या यः कुर्यात् सोऽयं रहस्यानि प्रकाशानि च पापानि पूर्वजन्मसु इहजन्मनि च कृतानि सर्वाणि मोचयित्वा सर्वकामानवाप्नुयात् । एवं यस्य विष्णोरालयार्चनमग्निहोत्रं शाश्वतं तिष्ठेत् स तद्विष्णोः परमं पदं गच्छतीति ब्रह्मवादिनो वदन्ति ।

उत्सवफलश्रुतिः

[2]एतस्मिन् नित्याग्निहोत्रे [3]याजने चातुर्वर्ण्येषु ब्राह्मणाद्याः त्रैवर्णिकाः शस्ताः । चतुर्थः शूद्रोऽनुलोमोऽपि सर्वस्य नेतारं राजानं यजमानं सङ्कल्प्यैव कारयेत् । प्रतिलोमानामन्तरालानां व्रात्यानां च नैवाधिकार इति **काश्यपः** ।

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे अवभृथपुष्पाञ्जलिप्रदान-याजनाधिकारिनिर्णयो नाम

**नवतितमोऽध्यायः** [4]॥

## ॥ अथैकनवतितमोऽध्यायः ॥

अथ [5]चातुर्वर्णिकाः अनुलोमाः प्रतिलोमा अन्तराला व्रात्याश्चेति[6]जातयः पञ्चधा भवन्ति । तत्र ब्राह्मणादिचतुर्वर्णेषु जाताः चातुर्वर्णिकाः । उत्कृष्टान्निकृष्टायामनुलोमाः निकृष्टादुत्कृष्टायां प्रतिलोमाः तथा अनु-लोमात्प्रातिलोम्येन अन्तरालाः प्रतिलोमात्प्रातिलोम्येन व्रात्याः ।

पञ्चधा जातिः

तत्र चातुर्वर्णिकाः सवर्णादनन्यपूर्वायां सवर्णायां यथाविधि जाताः शुद्धाः । तस्मादेवान्यथा जातास्त्वशुद्धाः । तेष्वन्यपूर्वायां तु ब्राह्मणात्कुण्डो गोलश्च । क्षत्रि-

1. ख. एतेनोत्सवेन B. सवेन । 2. क. तस्मिन् । 3. क. यजमाना. चातुर्वर्ण्येषु । 4. ग. इति १७७ खण्डः । 5. इदं समस्तं पदं दृश्यते सर्वत्र । 6. क. जातिः पञ्चध इति ।

यात्पट्टचिह्नो भोजश्च । वैश्यान्मणिवेधवलयकर्तनवृत्तिः मणिकारः वलयकारश्च । शूद्रादश्वपालो मालवकः । एते अनुलोमाः ।

अनुलोमाः

शूद्रायां ब्राह्मणात् भद्रकालीपूजनचित्रमर्दलवृत्तिः[1] पारशव्यः मृगघाती निषादश्च । वैश्यायां कक्ष्याजीव्याग्नेयनर्तको [2] ध्वजविश्रावकवृत्ति-रम्बष्ठः कुलालवृत्तिः कुम्भकारः नाभेरूर्ध्ववस्त्रा नापितश्च । क्षत्रियायामाथर्वणकर्मवाहनारोहणसेनाधिपत्यकृत् ब्राह्मणसमः सवर्णः अभिषेकाद्रा-ज्यार्हः ज्योतिरायुर्वेदवृत्तिरभिषिक्तश्च । शूद्रायां क्षत्रियाद्दण्डेषु दण्डधारणवृत्तिरुग्रः शूलारोहणादियातनावृत्तिः शूलिकश्च । वैश्यायां वैश्यवृत्तिः श्रेष्ठित्वभाक् मद्गुः अश्वपण्यः आश्विकश्च । वैश्याच्छूद्रायां काष्ठादिविक्रयकः चूचुकः कटकर्मा कटकारश्चेति । प्रथमे अन्यायाच्चौर्याच्चरमे ।

प्रतिलोमाः

[3] शूद्राद्ब्राह्मण्यादिभ्यो जायन्ते प्रतिलोमाः । शूद्राद्ब्राह्मण्या मलापहारा झल्लरीकक्षो नैर्ऋत्यवासी कालायससीसाभरणः पूर्वाह्णे ग्रामप्रवेशी वार्ध्राणकण्ठः[4] चण्डालः । राजन्यायां सुरासवादिपण्यः पुल्कसः गाननर्तनजृम्भकवृत्तिः ऐलकश्च [5] । वैश्यायां गवाजमहिषपालनवृत्तिस्तद्रसविक्रयो वैदेहकः तैललवणादिजीवी शूद्रैरप्यभोज्यान्नः अस्पृश्यः चाक्रिकश्च । ब्राह्मण्यां वैश्यात् बन्दी जङ्घारिकवृत्तिः मागधः । क्षत्रियायां तन्तुवायः कांस्यवृत्तिः आयोगवः दुष्टसत्त्वघाती[6] आरण्यकवृत्तिः पुलिन्दश्च ।

राज्ञा विप्रायां प्रतिलोमेषु मुख्यः वेदानर्हः धर्मानुबोधकः सूतः शूद्र-वृत्तिः रथवाहनपरिचर्याजीवी [7] रथकारश्चेति । सूतो धर्महीनो द्विजैरस्पृश्यः [8] । अन्तरालात्तथाम्बष्ठादग्रजायां समुद्रलङ्घनजीवी[9] नाविकः राजन्यायामधोनापितः मद्गुः (?) । तयोः वेणुकः [10] चर्मकारश्च । चूचुकात् क्षत्रियायां मत्स्यबन्धश्च वैश्यायां चास्मात् समुद्रपण्यजीवः सामुद्रश्च । व्रात्याद्वैदेहकात्प्रथमयोः चर्मकार[11]-

---

1. मर्दनवृत्तिः । 2. क. अध्वजीर्वी वार्ताश्रावकवृत्तिः । 3. क. शूद्रात् द्विजभाजः 4. B वार्ध्राकण्ठः । 5. B मेलकश्च । 6. क. खादी । 7. च. बोधकारश्चेति । 8. B अङ्गस्पृश्यः (?) । 9. B लंघनानौजीवो । 10. ख. कर्मकारश्च । 11. B वल्लिकाजीविनौ ।

सूचीजीविनौ । आयोगवात्ताम्रजीविखनकौ खनकान्नृपायां वस्त्रनिर्णेजकः[1] शूद्रैरस्पृश्यः उद्बन्धकश्च । पुल्कसाद्विप्रायां रजोनिर्णेजकः । तस्यां चण्डालात् श्वमांसभोजी श्मशानवासी च श्वपचश्चेत्युच्छिष्टाः प्रोक्ताः तृणान्तरसम्भाष्याश्चेति समासः । व्यासस्तु विकल्पमानः सङ्ख्यां नावगाहते । ततो विमृश्यास्ता जातयः तासु तासु वृत्तिषु राज्ञा विनेतव्या इत्युपन्यस्यतीत्युपन्यस्यति ।

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे जातिपञ्चकसङ्करजातिविवरणं नाम एकनवतितमोऽध्यायः[2] ॥

---

## ॥ अथ द्विनवतितमोऽध्यायः ॥

अथातो निष्कृतिं व्याख्यास्यामः । [3]'शान्त्या शान्तो भवेद्दोषो व्याधितस्यौषधैर्य' थेति ब्रह्मवेत्तारो वदन्ति । तस्मान्न्यूनातिरिक्तेषु सर्वत्र ततक्षणादेव शान्तिं कुर्यात् । न कुर्याच्चेत् राजा राष्ट्रं च विनश्यति । तस्माद्वैदिकेषु सर्वेषु [4]क्रियाविपर्यासे द्रव्यहीने संस्कारादिदोषोपशमनार्थं प्रायश्चित्तमिति प्रायश्चित्तनिमित्तम् । द्रव्यहीने द्रव्यहानिः [5]क्रियाहीने क्रियाहानिः मन्त्रहीने तत्सर्वं नश्यति ।

प्रायश्चित्तप्रकारः

भूपरीक्षामकृत्वा अज्ञानादर्थलोभाद्वा विष्णुयज्ञ आरब्धश्चेत् महत्तरो दोषो भवति । तदुपशान्त्यर्थं तत् स्थाने गोमयेनोपलिप्य श्रामणकाग्निं साधयित्वा भगवन्तमग्नेर्दक्षिणतोऽभ्यर्च्य सप्तविंशतिभेदैराज्येनाहुतिसहस्रं हुत्वा भूमियज्ञं कृत्वा अतो देवा इत्यार्षं भूतदैवत्यं च हुत्वा आशीर्भिराघोष्य अग्निं विसृज्य वृषभचतुष्कं दक्षिणां दद्यात् ।

भूपरीक्षादौ

युगलाङ्गलादीनामुक्तवृक्षालाभे भगवन्तमभ्यर्च्य [6]सुवर्णभारैरलङ्कृत्य (?) शक्तितो दक्षिणां दद्यात् । युगे प्रमाणहीने वैष्णवं सीरे प्राजापत्यमायसे याम्यं

---

1. B निस्तेजकः । 2, ग. इति १७८ खण्डः । 3. छ. सा शान्तिः । शास्त्रौद्भवो दोषः । तस्याः शान्तिः निष्कृतिः । 4. ग. क्रियातन्त्र । 5. ग. पुण्यक्रियाहीने । 6. B. सुवर्णभाण्डैः ।

लाङ्गले रौद्रं भौतिकं हले वैष्णवम् । एतेषां भेदने [1]शीर्णे रज्जुछेदने अग्निं साधयित्वा अतो देवादि ब्राह्मं प्राजापत्यं गारुडं भौतिकं महाव्याहृतिमाज्येन हुत्वा देवमभ्यर्च्य रूप्यदानं कुर्यात् । हीनाङ्गे बलीवर्दे प्राजापत्यं रौद्रमार्षं वैष्णवमाज्येन जुहुयात् । कर्षणकाले व्रणयुक्ते वृषे सहस्रशीर्षादीन् विष्णोर्नुकादींश्च शान्तिं हुत्वा निष्काधिकं दक्षिणां दद्यात् । बलीवर्देषु क्षुधुसभ्रमणपतनेषु पौण्डरीकाग्निं साधयित्वा आज्येनाहुतिसहस्रं विष्णुगायत्र्या हुत्वा[2] पुनः कर्म प्रवर्तयेत् ।

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे भूपरीक्षाहीनप्रायश्चित्तादिविधिर्नाम द्विनवतितमोऽध्यायः ॥[3]

---

## ॥ अथ त्रिणवत्रितमोऽध्यायः ॥

कर्षणादौ-निष्कृतिः

कर्षणकाले कपालास्थि[4]रोमनखदन्ततुषभस्मपाषाणादिदर्शने तत्तदपोह्य पञ्चगव्येन आपो हि ष्ठेति तिसृभिः प्रोक्ष्य भूमियज्ञं [5]कृत्वा भूमिदानं [5]कृत्वा गवां पश्चात् निवेदयेत् । मन्त्रहीने सारस्वतं वैष्णवं रौद्रं हुत्वा कपिलाचतुष्कं दद्यात् । क्रियासङ्करे महाव्याहृतिं सहस्राहुतिं च जुहुयात् । गवां सस्यनिवेदने हीने गोदानसूक्तं शान्तिं च हुत्वा कृष्णवृषभं शुक्लिङ्गं विप्रेभ्यो दत्वा गोष्ठे पलालभारमुत्सृजेत् । विष्वक्सेनपूजाहीने तत्तन्मन्त्रैः तिलसर्षपमिश्रचरुणा हुत्वा त्रिनिष्कं वा दक्षिणां दद्यात्[6] ।

लोहबेरहीने दारुणा कृत्वा अतो देवादिना आज्येन [7]शताष्टवारं जुहुयात् । शान्तिहीने विप्रशतं भोजयित्वा ऋत्विजां च दक्षिणां दद्यात् ।

तरुणालय-विहीने

तरुणालयविहीने सर्वनाशः तस्मात् पौडरीकाग्निं साधयित्वा अब्जहोमं हुत्वा पारमात्मिकमीङ्कारादीन् शान्त्यर्थं हुत्वा वृषभैकादशं दक्षिणां दद्यात । यथोक्तं कारयेत् ।

---

1. ग. जीर्णे । 2. B हुत्वोध्य । 3. ग इति १७९ खण्डः। 4. ग. लोह । 5. ग. कुर्यात् । 6. ग. इति १८० खण्डः । 7. क. शताष्टकं ।

ब्रह्मपद्मावटे कपालास्थिशिलादिदर्शने वैष्णवं भूमिदैवत्यं हुत्वा कृच्छ्रं चरेत् । तत्र प्रक्षिप्तपद्मभङ्गे तत्काले प्राजापत्यं वैष्णवं जुहुयात् । ब्रह्मपद्मावटे

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे कर्षणादिहीनप्रायश्चित्तविधिर्नाम त्रिणवतितमोऽध्यायः ॥

---

## ॥ अथ चतुर्णवतितमोध्यायः ॥

जलस्य विपरीते ब्राह्मं वारुणं घटे भिन्ने यज्ञोपस्करनाशे यागसङ्कुले कलहे रुधिरस्रावे च वैष्वक्सेनं गारुडं वैष्णवं जुहुयात् । वामावर्ते जले तस्मिन् ब्रह्मपद्मावटे वारुणं वायव्यं भूमिदैवत्यं यजेत् । ब्रह्मपद्मावटे
[1] सङ्कुलं चेदतो देवादि ब्राह्मं भौमं वारुणं गारुडं यजेत् । पांसुच्छन्ने जले अधरोत्तरे पार्श्वस्थे सति ब्राह्मं वारुणं [2] सहस्रशीर्षाद्याज्येन जुहुयात् ।

शङ्कुः स्थापनकाले भग्नश्चेत् वैष्णवं ब्राह्मं जुहुयात् । रज्जुछेदने याम्यं वायव्यं वैष्णवं जुहुयात् । इष्टकाग्रविपर्यासे गर्भन्यासहीने प्रस्तरे सङ्कुले हीनाङ्गे प्रमाणे हीने दोषयुक्ते विहीने द्वारगृहभित्त्यादीनां हीनाधिक्ये अङ्गहीने विमाने यजमानाचार्यविपर्यासे पौण्डरीकाग्निं समाहरेत् ।

[3] अभ्युत्पाताशनिपातधूमादिभिः मन्दिरे [4] स्पन्दिते महाशान्तिं हुत्वा विप्रशतं भोजयित्वा दक्षिणां दद्यात् । भुवङ्गपतङ्गकवाटबोधिकोत्तरस्थूणादीनामालये दोषयुक्ते जीर्णे शीर्णे वा तत्तदपहायान्यं संयोज्य प्रोक्षणैः प्रोक्ष्य तत्तद्दैवत्यं हुत्वा भोजयेत् । विमानाङ्गवैकल्ये

सम्यक् संहिते विमाने त्वनारब्धे ध्रुवरूपे अब्दातीते महाशान्तिं हुत्वा सहस्रभोजनं च कृत्वा शक्तितो दक्षिणां दद्यात् । शून्ये तथाब्दे द्विगुणं द्विगुण-

---

1. सङ्कुलं चेत् दौवारिकं । 2. क. सहस्रशीर्षाद्येन । 3. ग. अथोत्पात । 4. B. स्कन्दे A स्पन्दे ।

मारभेत् । द्वादशाब्देषु विष्णुयागं कृत्वा हरिशाङ्करबेरं वा [1] दशाब्दे द्वादशाब्दे वा समारभेदिति विज्ञायते ।

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे जलादिविपरीतप्रायश्चित्तविधिर्नाम चतुर्णवतितमोऽध्यायः [2] ॥



## ॥ अथ पञ्चनवतितमोऽध्यायः ॥

दारुसङ्ग्रहणादै

दारुसङ्ग्रहणकाले [3] निमित्तेषु विपरीतेषु दृष्टेषु स्नात्वा महाशान्तिं हुत्वा अष्टाक्षरमष्टसहस्रमावर्त्य सौदर्शनेनात्मानमभिमृश्य दक्षिणां दत्वा कर्मारभेत् । उक्तवृक्षालाभे अन्यं वृक्षं सारवन्तमादाय शान्तिं हुत्वा निष्काधिकदक्षिणां दत्वा आहरेत् । अनिष्टदिक्पतने अन्यालाभे महाशान्तिं हुत्वा आहरेत् । शूलकल्पनाहीने विपर्यासे सहस्राहुतिं हुत्वा शान्तिं संवाच्य आशीर्भिराघोष्य देवमनुमान्य दक्षिणां दत्वा आरभेत् । उक्तरत्नालभे अग्निं परिस्तीर्य अग्नेर्दक्षिणतो रत्नत्रयमभ्यर्च्य तेभ्यो हुत्वा सङ्गृह्य तत्तद्रत्नमिति मनसा ध्यात्वा तत्तन्मन्त्रेण स्थापयेत् । धातोरपि पारदमादायैवं समाचरेत् । बीजानां यवं सोममभ्यर्च्य हुत्वा न्यसेत् । रत्नानां सङ्कुले मन्त्रहीने वैष्णवं जुहुयात् । काष्ठमृद्रज्जुशर्कराम्बरवर्णादीनां योगकाले क्रियाहीने विपर्यासे शान्तिं हुत्वा देवमनुज्ञाप्य दक्षिणां दत्वा आरभेत् । [4] अक्षिमोचनकाले अतिक्रान्ते षण्मण्डलाधिपमन्त्रान् शान्तिं हुत्वा पश्चादक्षिमोचनं कुर्यात् । मन्त्रद्रव्यक्रियाहीने अक्षिमोचनान्ते शान्तिं विधानेन हुत्वा दक्षिणां दद्यात् ।

सामान्यप्रायश्चितम्

भूपरीक्षाद्यक्षिमोचनान्तं यद्यत्क्रियाविहीनं तस्य शान्तये तद्दिने पौण्डरीकाग्नौ महाशान्तिं हुत्वा आरभेत् । उक्तशिलालाभे अंजननिभामदाय हिरण्ये दिग्देवताभ्यो हुत्वा अष्टाक्षरमष्टसहस्रं जप्त्वा

1. B दशांशाद्द्वादशायुतं (?) । 2. ग. इति १८१ खण्डः । 3. ग. निमित्तानि । 4. A. अक्षिमोक्षण ।

विष्णुमभ्यर्च्याहरेत् । शिलायां गर्भदर्शने तदपहाय दोषशान्तिं हुत्वा अन्यत्शिलाग्रहणमारभेदिति विज्ञायते । शिलाग्रहणे

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे दुर्निमित्तदर्शनप्रायश्चित्तविधिर्नाम पञ्चनवतितमोऽध्यायः [1] ॥

## अथ षण्णवतितमोऽध्यायः

अथ [2] ध्रुवस्यानुरूप्यविपर्यासे कौतुके प्रमाणहीने अन्यालयकृते नृपराष्ट्रविनाशाय भवति । तस्मादपनीय महाशान्तिं त्रिरात्रं हुत्वा देवं स्थापयेत् । स्थापिते नवे कौतुके [3] अन्यस्मिन् पश्चात् अन्यसंवेशनं नाचरेत् । लोहगौरवं कुर्यात् चेत् शान्तिं हुत्वा पूर्ववदाचरेत् । जातरूपं विना अन्यलोहमिश्रितं बिम्बं न स्थापयेत् । स्थापिते तदपनीय पूर्ववद्धुत्वा अन्यं संस्थापयेत् । पीठप्रभावनतावन्यलोहकृते च शङ्खचक्रादिहीने दुर्भिक्षव्याधिपीडाकरं तस्मादवश्यं सन्दध्यात् । मन्त्रहीने मधूच्छिष्टे विधानेन अब्जाग्नौ ब्राह्मं प्राजापत्यं सौरं सौम्यं वैष्णवान्तं हुत्वा ब्राह्मणानन्नेन परिवेष्य शक्तितो दक्षिणां दत्वारभेत् । अङ्गोपाङ्गहीने अवकुण्ठिते शीर्णे बिम्बे अर्चनं [4] यदि चेत् महत्तरो दोषो भवति । तस्माज्जीर्णकौतुकमार्गेणापहायान्यं स्थापयेत् । [5] सौवर्णं बिम्बं जीर्णं न त्याज्यम् । लोहवत्कृत्वा नवीकृत्य स्थापयेत् । उपाङ्गे दोषयुक्ते तत्तत्प्रतिसन्धाय [6] पूर्ववद्धुत्वा बिम्बशुद्धिं कृत्वा स्थापयेत् ।

ध्रुवकौतुकयोरनानुरूप्ये

जीर्णाङ्गसन्धानादिषु

अनधिवासिते बिम्बे स्थापिते राजराष्ट्रविनाशाय भवति । अज्ञानादर्थलोभाद्वा स्थापितं चेत् महाशान्तिं हुत्वा पश्चादधिवास्य स्थापनं सम्यगाचरेत् ।

1. ग. इति १८२ खण्डः । 2. छ. ध्रुवानुरूपस्य विपर्यासे । 3. अन्यस्मिन्निति स्थाने 'निवेश्य' इति ग. कोशे दृश्यते । 4. छ. यदिकृतं चेत् B. बिम्बार्चना यद्य र्चितं चेत् 5. छ. सौवर्णं जातरूपमयं । 6. क. प्रति संधाप्य बिम्बशुद्धिं ।

स्थापनात्पूर्वमङ्गवैकल्ये तत्तत् प्रतिसन्धाय स्थापयित्वा शान्ति हुत्वारभेत । नयनमोक्षक्रियां हित्वा स्थापितं चेदब्जाग्नौ त्रिशतं वैष्णवं हुत्वा तदालयगतदेवानां चतुर्भिर्मूर्तिमन्त्रैश्च हुत्वा सहस्राहुतिं हुत्वा सहस्रभोजनं कृत्वा स्थापयेत् । संवत्सरेऽतीते लोह्रमयं भवतीति काश्यपः ।

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे कौतुकप्रायश्चित्तविधिर्नाम षण्णवतितमोऽध्यायः[1] ॥



## ॥ अथ सप्तनवतितमोऽध्यायः ॥

अनुक्तमुहूर्ते स्थापिते

अथ स्थापनानुक्तनक्षत्रे मुहूर्ते स्थापिते अब्जाग्नौ धात्रादिभूतान्तं च हुत्वा ब्राह्मणान् भोजयित्वा पुनः स्थापनं कुर्यात्। स्थापकैः दोषयुक्तैः वर्जयेत् (?) । अन्यैरनुक्तैश्च स्थापिते पूर्ववद्धुत्वा विप्रशतं भोजयित्वा हिरण्यभूगवादिदक्षिणां दत्वा पुनः स्थापनं कुर्यात् ।

पदार्थिनां भर्त्सनादौ

यजमानाचार्यर्त्विगादि[2]विरुद्धे येन केनचित् भर्त्सनशापनहननतर्जनादयः तेषां यदि वर्तन्ते तत्र ब्राह्मं पाञ्चभौतिकं वैष्णवं श्रीभूदैवत्यं रौद्रं सारस्वतं बार्हस्पत्यं हुत्वा आशीर्भिरभिनन्द्यारभेत । तत्रान्यविरुद्धे तु ब्राह्मं प्राजपत्यं वैष्णवं जुहुयात् । तत्तत्कर्मकरविद्वेषेऽपि वैष्वक्सेनं जुहुयात् । रोदने रुधिरस्रावणे पतने च शान्तिं हुत्वा दक्षिणां दद्यात् ।

मरणादौ

मरणे अन्त्यजप्रवेशे च महाशान्तिं हुत्वा ब्राह्मणान् भोजयित्वा शान्तिं प्रवाच्य समाचरेत् । श्वकाकाद्युपहतौ प्रवेशे च अग्निशालयां तद्द्रव्यार्हकं शौचं कृत्वा वास्तुहोमान्ते वैष्णवं हुत्वा शक्तितो दक्षिणां दत्वा पुण्याहान्ते समारभेत । श्वकाकसूकरादिभिः बिम्बस्पर्शने पञ्चगव्यैः प्रोक्ष्य पुण्याहं वाचयित्वा हेमरूपं स्वशक्तितो दक्षिणां दद्यात् । उच्छिष्टादिभिः स्पृश्यते यदि बिम्बं कुशोदकैः प्रोक्ष्य पुण्याहान्ते दक्षिणां दत्वारभेत ।

शयनालाभे अम्बराण्यत्र कल्पयेत् । शयनस्थो देव उत्थापितश्चेत् वैष्णवं

1. ग. इति १८३ खण्डः । 2. छ. ऋत्विगादीनां ।

दैवत्यं हुत्वा अन्यत् शयनमाकल्प्य पुनः शाययेत् । शय- शयनादीनामलाभे
वेपर्यासे [1]सौरं वैध्नं सौदर्शनं वैष्वक्सेनं जुहुयादिति[2] ।

ऐन्द्रे वास्त्वग्निसंस्थापनं कुर्याच्चेत् ऐन्द्रं वैष्णवं हुत्वा विप्रशतं भोज- त्वमेवान्यदिक्स्थापने तत्तद्दिग्दैवत्यं वैष्णवयुतं हुत्वा भोजनमारभेत । गर्भा- रमाने वा [3] विलीने निम्ने काले (?) छुल्ल्यां वास्तुहोमं यदि कुर्यादाग्नेयं वैष्णवं प्राजापत्यं व्याहृत्यन्तं हुत्वा पुनः सम्यगाचरेत् ।

हीनाधिक्येनाग्निकुण्डं कृतं चेत् ब्राह्मं सौम्यमाग्नेयं सौरं जुहुयात् । ाग्निविनाशे मथिताग्नावाग्नेयं चरुणा हुत्वा रभेत । मथि- अग्निकुण्डादौ
ाभे आचार्यगृहाच्छ्रोत्रियगृहाद्वा आहृत्य तस्मै वित्तं दत्वा ान चरुणा हुत्वा आरभेत । वामावर्ते केशे धूमे अगन्धेऽपि विस्फुलिङ्गेपि न्यूनायां अतीव विज्वलिते ज्वालावलीढके ब्राह्मं वैष्णवं व्याहृत्यन्तं ब्राह्मणान् भोजयेत् ।

न्त्रविपर्यासे वैष्णवमाग्नेयं व्याहृत्यन्तं हुत्वा 'अहमिन्द्र' क्रियामन्त्र-
प्रणमेत् । आहुतीनां विपर्यासे ब्राह्मं वैष्णवं हुत्वा यजेत । विपर्यासे
न्यविहीने पूर्णाहुतिं व्याहृतिं त्रिराज्येन जुहुयात् । तेन सर्वं पूर्णं भवति । ामक्रियाहीने सङ्कुले वा पूर्ववद्धुत्वा सूक्तं वैश्वानरं जपेत् । सर्वकर्म- र्भवति । यज्ञोपस्करमन्त्राणां[4] विपर्यासे ब्राह्मं वैष्णवं हुत्वा दक्षिणां । चरूणां विपर्यासे अतीते च शान्तिं हुत्वा ब्राह्मणान् भोजयेत् । वैपरीत्येऽथ ा विहीने वा आज्येनार्षं वैष्णवं ब्राह्मं [5] प्राजापत्यमैन्द्रं सारस्वतं चरुण पुनरारभेत । हीननिष्कृतिमारभ्यैतदन्तं सार्वत्रिकमिति विज्ञायते ।

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे प्रतिष्ठाप्रायश्चित्तविधिर्नाम

सप्तनवतितमोऽध्यायः [6] ॥



. छ. सौरं सौदर्शनमित्येव । 2. ग. इति १८४ खण्डः । 3. B. लीले निम्ने वा- (?) 4. क. वस्तूनां A. शस्त्राणां । 5. ग. रौद्रं सारस्वतं । 6. ग. इति १८५ खण्डः

## ॥ अथाष्टनवतितमोऽध्यायः ॥

कुम्भे

प्रमाणहीने कुम्भस्य महान् दोषो भवति । मानहीने महाव्याधिः कृष्णमण्डलेऽर्थहानिः स्फुटिते पुत्रहानिः खण्डिते जातिभ्रंशः वर्णहीने मरणं भवति । तस्मात्सलक्षणमेवाचरेत् । [1] अलक्षणे आहृते [2] तामपहाय वैष्णवं वास्तुदैवत्यं हुत्वासमारभेत । [3] कुम्भपूजनकाले च आचार्यादीनां भ्रमणचलननिद्रालस्यमोहक्रोधलोभाद्यनर्थदर्शने महाशान्तिं हुत्वा विप्रशतं भोजयित्वा गवादिदक्षिणां दत्वा अन्यगुरुं सङ्गृह्य यागमारभेत् । [4] वस्त्रालाभेऽथ कुम्भस्य वैष्णवं वारुणं हुत्वा हिरण्यं दक्षिणां दद्यात् । उच्छिष्टाशुचिकाकादिदर्शने तं त्यक्त्वा अन्यमादाय महाशान्तिं हुत्वा आचार्यमनुज्ञाप्याराध्यारभेत । कुम्भे यदि प्रभिन्ने सर्वप्रजामरणं भवति । तस्मात् भ्रंशं [5] दुःखान्तं विज्ञाय विष्णुयागं तथा कृत्वा हिरण्यभूगवाश्वादीन् दत्वा पुनः समारभेत । विष्णुगायत्र्या प्रणवाद्यया समिदाज्यचरुभि[6]राहुतिसहस्रमब्जाग्नौ हुत्वा पुण्याहं प्रवाच्य आशीर्भिरभिनन्द्य द्वादशनिष्कं तदर्धं वा दत्वा आरभेतेति भृगुः [7] । महाशन्तिं हुत्वा आरभेतेत्यङ्गिराः ।

रात्रौ प्रतिष्ठायाम्

रात्रौ प्रतिष्ठा चेत् सर्वदोषकरं तस्मादाग्नेयं [8] वैष्णवं सौरं च पृथक् पृथगष्टसहस्रं हुत्वा पुनः दिवैव [9] स्थापनं कुर्यात् ।

दक्षिणाप्रशंसा

ऋत्विगाचार्यादीनां दक्षिणाहीने तत्सर्वं भस्मसात् भवति । तत्फलमसुराः स्वस्थाः गृह्णन्ति । तस्मात्तेभ्यो दक्षिणां न हापयेत् । यदि [10] हापयति शक्तो भासः काकोऽपि भूत्वा पुनः [11] तत्तज्जन्मशतं [12] प्राप्नुयादिति । तस्मात्ते दैववत्पूज्या भवन्तीति विज्ञायते ।

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे कुम्भपूजाविपर्यासादि प्रायश्चित्तविधिर्नाम अष्टनवतितमोऽध्यायः [13] ॥

---

1. क. अलक्षणेष्वाहृतेषु । 2. क. तदपहाय । 3. कुंभपूजनाकालेऽपि शान्तिं जुहुयादिति B. कोशेष्वत्राधिकं दृश्यते । 4. वस्त्रालाभे । 5. छ. दुःखंतं B. दुःखं समास्थाय । 6. छ. आज्याहुति । 7. ग. इति १८६ खण्डः । 8. B सौरं वैष्णवं । 9. B निर्मन्थ्येप्यग्नै इत्यधिकं (?) । 10. B गृहति । 11 B तत्तत्प्रोष्य जन्मशतं । 12. A आयाद्विति । 13. ग. इति १८७ खण्डः ।

## ।। अथैकोनशततमोऽध्यायः ।।

अथैककालार्चने हीने अग्निं समाधाय वैष्णवं भूमिदैवत्यं हुत्वा द्विगुणमर्चयेत् । द्विकाले द्विगुणं त्रिकाले त्रिगुणम् । एकाहमर्चने हीने अग्निं परिस्तीर्य शान्तिं हुत्वा सप्तभिः कलशैः संस्नाप्य ब्राह्मणान् भोजयेत् । द्वितीये द्विगुणं तृतीये त्रिगुणम् । एवं मासान्तं वर्धयति । मासेऽतीते वास्तुशुद्धिं कृत्वा पञ्चाग्नीन् परिस्तीर्य दिग्दैवत्यं हुत्वा अब्जाग्नौ वास्तुहोमं हुत्वा अष्टशतैः कलशैः भगवन्तं संस्नाप्य हौत्रं प्रशंस्य विप्रशतं भोजयेत । द्वितीये द्विगुणं तृतीये त्रिगुणम् । एवं संवत्सरान्तं वर्धयति । संवत्सरेऽतीते स्थापनं सम्यगाचरेत् । [1]द्वादशाब्दातिक्रमे भगवान् न रमेत । तत्र पिशाचब्रह्मराक्षसादयो वसन्ति ।

अर्चनाहीननिष्कृतिः

तस्मात्तस्मिन् यदीच्छेच्चेत् देवेशं स्थापयितुं सुवर्णहलेन कर्षणादीन् मन्त्रेण कृत्वा अगारे पलालभारमुत्सृज्य गोगणाय निवेद्य त्रयोदशाहं सप्ताहं पञ्चाहं त्र्यहं वा विप्रान् भोजयित्वा अगारं नवीकृत्य शुभर्क्षे वास्तुशुद्धिं कृत्वा मध्ये अब्जाग्नावब्जहोमं कुर्यात् [3] ।

सर्वत्रारभेत अनियमेषु । अत्रैवार्षिकं बीजमजं ब्रह्मवादिनो वदन्ति । तस्मात् शालिपिष्टमयं किष्कुायतमूर्त्विगुच्छ्रयमङ्गोपाङ्गयुतं पशुं कृत्वा अग्नेः दक्षिणतः संस्थाप्यालङ्कृत्य रात्रिसूक्तेनाभिमृश्य 'प्रजापते न त्व' दिति दक्षिणे कर्णे वामे 'त्वघोरचक्षु' रित्युपांशुनैव जप्त्वा 'चत्वारि शृ' ङ्गेत्युदरमभिमृश्य ब्राह्ममासनमास्थाय स्रुवजुह्वादीन् 'सञ्चत्वे जग्मु' रिति प्रोक्षयति । अध्वर्युर्वदति 'होतरे' हीति । अत्रैव 'अध्वर्यो देवता' इति 'ओं नमः प्रवक्त्र' इति होता हौत्रक्रमेणैव [4] स्थापनाधिपानामावाहनक्रमेण जुष्टाकारस्वाहाकारौ कृत्वा अध्वर्युः 'ब्रह्मन् वयमिदं त्वया सृष्टस्य जगतः सर्वशान्तिदं देवयजनं करिष्याम' इति ब्रह्माणं वदति । 'होतरे' हीत्यत्रैवाध्वर्युः [5]"अध्वर्यो देवता'

विष्णुयागः

---

1. B द्वादशाब्देऽतीते । 2. B उत्सृज्येति न दृश्यते । 3. B कृत्वा तत्रालाभे युञ्जीतत्रिवार्षिकं (?) 4. ग. स्थापनाधिपतीनाम् । 5. B अध्वर्यो हनुमन्ते जगत्सृणान्यं देवयजनं कुरुष्वेतीति पाठोऽत्र B कोशेषु दृश्यते ।

इत्यारभ्य होता 'हिं भूर्भुवस्सुवरो' मित्यन्ते 'जगद्रक्षाणार्थं देवयजनं कुरु'ष्वेति ब्रह्माणं वदति । पश्चात् पशुमभिमन्त्र्य 'सहस्रशीर्षा पुरुषः पुरुष एवे' ति शृङ्गौ 'एतावान् त्रिपादूर्ध्वे' इत्यक्षिणी 'तस्माद्विराट् यत्पुरुषे' णेति शीर्षं 'सप्तास्यासन्, तं यज्ञ' मिति [1]कण्ठं 'तस्माद्यज्ञात् 'तस्माद्यज्ञा' दित्युदरं 'तस्मादश्वा' इति पुच्छं 'यत्पुरुषं व्यदधु' रिति वृषणं 'ब्राह्मणो' स्येति लिङ्गं 'चन्द्रमा मनस' इति नाभिं 'नाभ्या आसी' दिति पूर्वपादौ 'वेदाहमेतं धाता पुरस्तात् यज्ञेन यज्ञ' मित्यपरपादौ च क्रमेण च्छित्वा जुहोति । पश्चान्महाशान्तिं व्याहृत्यन्तं हुत्वा आशीर्भिराघोष्य अध्वर्युप्रभृतीनां पृथक् पृथक् दक्षिणां दद्यात् । स एष विष्णुयागः । इत्येवं कृत्वा पश्चात् [2]शूलस्थापनादि कर्मारभेत । [3]लोकधर्मविगर्हितानां च निवेदने शान्तिं हुत्वा सप्तभिः कलशैः संस्नाप्य आचार्यः कृच्छ्रं चरतीति विज्ञायते ।

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे अर्चनाहीनप्रायश्चित्तविष्णुयागविधानं नामैकोनशततमोऽध्यायः [4] ॥



## ॥ अथ शततमोऽध्यायः ॥

स्नपननिष्कृतिः

अथातः स्नपननिष्कृतिं व्याख्यास्यामः । दिवा निशि सन्धिषु यत्र यत्र निमित्तं स्यात् तत्तत् स्नपनकालः । कालातीते नित्यार्चनायां न दोषो भवति । प्रमुखे चोत्तरे वापि स्नापनं करोति । [5]अन्ययोः नाचरेत् । न मूलागारे तथाचरेत् । विदिक्ष्वैशान्ये वा कुर्यात् । आग्नेये नैर्ऋते वायव्ये न समाचरेत । यदि कुर्यात् शान्तिं हुत्वा पुनरन्यत्र स्नपनमारभेत । शयनस्थे तथा देवे प्रभाते सौरं सौम्यं वैष्णवं व्याहृत्यन्तं हुत्वा बेरमुत्थाप्य प्रोक्षणैः प्रोक्ष्याभ्यर्च्याचरेत् । वेद्याः प्रमाणहीने भूमिमर्घ्यान्तमभ्यर्च्य [6]प्रपायामथवा भूम्यां कूर्चं वासो वा न्यस्य कुर्यात् । स्नपनार्थं प्रकल्पितं द्रव्यमग्निदग्धं चेत् आग्नेयं वारुणं सौम्यं वैष्णवं च हुत्वा पुनरादायाचरेत् । प्रमादात्साधितं पूर्णं कलशं

---

1. कर्णं । 2. B शिला । 3. लोकधर्मविरुद्धव्यापारचतुष्कं । 4. ग. इति १८८ खण्डः । 5. B अन्ययोः यदिवा लोकमूलागारे 6. प्रपां वा दर्भकूर्चं वासो वा ।

भिद्यते यदि अन्यं कलशमादाय पूर्ववन्मन्त्रेणापूर्याधिदेवमाराध्य द्वादशाक्षरेमष्टाक्षरं वा अष्टसहस्रमावर्तयेत् । [1]द्रव्याणामेवं कलशादीनां विपर्यासे तत्तत्स्थाने निवेश्याभ्यर्च्य विष्णुगायत्रीमष्टशतं जपेत् । एतेषां श्वकाकाद्यन्त्याशुचिस्पर्शे तदपनीयान्यमादाय अष्टाक्षरं शतमावर्त्य देवमनुज्ञाप्य तत्तत्स्थानेऽभ्यर्च्य स्नापयेत् । संसृष्टिनं चैक्यमपनीयाचरेत् । द्रव्याणां हीनता स्याच्चेत् जलेन पूरयेत् । उक्तद्रव्यालाभे तत्तत्प्रतिनिधिं [2]स्मृत्वा तत्तद्द्रव्याधिपं वैष्णवान्तं जुहुयात् । मध्वजाविकमहिषीक्षीरदधिस्नापिते शान्तिं हुत्वा पञ्चगव्यैः संस्नाप्य शान्तिं वाच्यारभेत । प्रमादान्निद्राद्यैः[3] पतिते बिम्बे तदा संभ्रान्तमानसो भूत्वा उत्थाप्य पञ्चगव्यैः संस्नाप्य प्रोक्षणैः प्रोक्ष्य श्वभ्रे स्थापयित्वा 'भुवर्भुवर्भू' रिति बिम्बस्य मूर्ध्नि नाभौ पादे च स्पृष्ट्वा 'भगवतो बले' नेति भगवन्तं प्रणम्याभ्यर्च्य वैष्णवं हुत्वा स्थापयेत् । तोरणादिविपर्यासे तत्तदधिदैवत्यं केवलं विहीने सौरं सौम्यं प्राजापत्यं वैघ्नं सौदर्शनं हुत्वा असङ्कुलमारभेत ।

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे स्नपनप्रायश्चित्तविधिर्नाम

शततमोऽध्यायः [4] ॥

## ॥ अथैकोत्तरशततमोऽध्यायः ॥

सुरर्षिमनुष्याणां बलं यस्मात् प्रवर्धते तस्माद्बलिरिति प्रोक्तम् । बलिमुत्थाप्य विघ्नश्चेद्येन[5] केनचित् ब्राह्मं सौम्यं सौरं गारुडं [6]वैष्वक्सेनं हुत्वा पुनरारभेत । एककाले हीने सप्तभिः कलशैः भगवन्तं संस्नाप्य सौरं सौम्यं गारुडं वैष्णवमौपासनाग्नौ हुत्वा बलिमारभेत । द्विकाले द्विगुणमेवं सप्तरात्रं वर्धयेत् । सप्तरात्रेऽतीते तदालयगतानां तत्तन्मन्त्रैः हुत्वा पुनश्शान्तिं समारभेत। द्वादशाहेऽतीते महाशान्तिं हुत्वा देवेशं संस्नाप्यारभेत । स्त्रीशूद्रानुपेताशुचिपतितान्त्यजादिस्पर्शने [7] च तदपहाय ब्राह्मं प्राजापत्यं [8]सौम्यं सौरं गारुडं

नित्यबलिनिष्कृतिः

1. A. द्रव्यमेवं कलशादीनां । 2. ग. ज्ञात्वा । 3. B निर्माल्ये । 4. ग. इति १८९ खण्डः । 5. B अन्येन । 6. B वैष्णवमिति तत्र । 7. क. पतने च । 8. क. सौम्यमिति न दृश्यते ।

वैष्णवं हुत्वा आरभेत । बिम्बे प्रमाणहीने भिन्ने [1] शीर्णे वैष्णवं जुहुयाच्छतम् । बलिधारकपतने गारुडं वारुणं वायव्यं बलिदैवत्यं व्याहृत्यन्तं हुत्वा कुर्यात् । उक्तलक्षणयुतपात्रालाभे हविःपात्रं सङ्गृह्य तद्रूपं ध्यात्वा तदधिदेवं वैष्णवं हुत्वा बलिमुद्धरेत् । केशकीटादिदूषिते अयोग्याशुच्यन्नकल्पिते तत्त्यक्त्वा बलिं सौरं सौम्यमाग्नेयं गारुडं वैष्णवमार्षमाज्येन व्याहृत्यन्तं हुत्वा आरभेत । [2] एवमेव हविर्निवेदने चोक्तमिति विज्ञायते ।

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे बलिहीनप्रायश्चित्तविधिर्नाम एकोत्तरशततमोऽध्यायः [3] ॥

—

## ॥ अथ द्व्युत्तरशततमोऽध्यायः ॥

उत्सवनिष्कृतिः

अथोत्सवप्रायश्चित्तम् । ध्वजपतनभग्नभेदहीनेषु ध्वाजं वैष्णवं व्याहृत्यन्तं हुत्वोत्सवमारभेत । घोषणे हीने ब्राह्मं प्राजापत्यं सौदर्शनमीङ्कारादीन् दक्षिणाग्नौ जुहुयात् । चक्रामितगरुडादिपतने गारुडं वैष्णवं सौदर्शनं वैष्वक्सेनं सौरं सौम्यं वैष्णवं जुहुयात । देवदेवस्य पतने लोकानां च महद्भयम् । तस्मादुद्विग्नमानसो भूत्वोद्धृत्य बिम्बं प्रक्षाल्य सप्तभिः कलशैः संस्नाप्य शान्तिं हुत्वा आचार्यं संपूज्योत्सवमारभेत । अङ्गहीनं यदि भवेत् तद्विसृज्य अन्यमादाय तदर्चास्थितां [4] शक्तिं तत्रावाह्य संस्थाप्य पूर्ववत्प्रायश्चित्तं [5] हुत्वोत्सवं कुर्यात् । यानाद्यदि पतिते बिम्बे पीठात् प्रभेदे पुनः संयोज्य संशोध्य भूमियज्ञं कृत्वोत्सवं कुर्यात् । प्रभायुधाभरणादीनां भेदे चैवं कृत्वा सप्तभिः कलशैः संस्नाप्य शान्तिं हुत्वारभेत ।

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे ध्वजपतनादिप्रायश्चित्तविधिर्नाम द्व्युत्तरशततमोऽध्यायः ॥

---

1. क. जीर्णे । 2. B अनेनैव । 3. ग. इति १९० खण्डः । 4. छ. यां शक्तिं । 5. B यजित्वा ।

## ॥ अथ त्र्युत्तरशततमोऽध्यायः ॥

बलिपतने बलिरक्षकमभ्यर्च्य ध्वाजं वैष्णवं हुत्वा बलिमुद्धरेत् । सन्धौ बलिहीने तत्सन्ध्याधिपमूर्तिभिः वैष्णवं व्याहृत्यन्तं हुत्वा पुनर्बलिं क्षिपेत् ।

उत्सवनिष्कृतिः

वादकगायकनर्तकाप्सरसां पतने भर्त्सने क्रोधे ब्राह्मं गारुडं वैष्णवं हुत्वोत्सवमारभेत । ध्वजपिञ्छचामराम्बरादीनां दहने पतने गारुडमाग्नेयं वैष्णवान्तं जुहुयात् । दीपहीने अग्निसूक्तं हुत्वा आग्नेयं धूपहीने बार्हस्पत्यम् ।

ऋत्विगाचार्यादीनां संक्षोभे सप्तर्षिदैवत्यं वैष्णवान्तं जुहुयात् । कालातीते ब्राह्मं वैष्णवम् । एककालोत्सवे हीने तद्दिनाधिपमभ्यर्च्य शान्तिं हुत्वा आरभेत । द्विकाले हीने द्विगुणमुत्सवमाचरेत्[1] । नृत्तगेयवाद्यालङ्कारयानाद्यन्यतमहीने[2] ब्राह्मं प्राजापत्यं गारुडं वैष्वक्सेनं वैष्णवान्तं हुत्वा सम्यक् कुर्यात् । कलहे रुधिरस्रावे अग्न्युत्पाते शान्तिं हुत्वा ब्राह्मणान् भोजयित्वा पुनरारभेत ।

अवभृथात्पश्चात् सप्ताहान्नवाहाद्वा अन्तरे यदि ध्वजावरोहणं न स्यात् अनावृष्टिर्भवति । अतो ध्वाजं गारुडं ब्राह्मं वैष्णवं हुत्वा देवमनुज्ञाप्य अवरोहयेत् । भृत्यवर्गसंक्षोभे भौतिकं वैष्णवान्तं जुहुयात् । तत्कालेऽतीते ब्राह्मं वैष्णवान्तं जुहुयात् । अतः समानीयाराधयति । सूरिषु (?) ब्राह्मं वैष्णवं बार्हस्पत्यं सारस्वतं हुत्वा अभिपूजयेत् । यद्द्रव्यं विहीनं तद्दैवत्यमन्त्रान् वैष्णवान्तं जुहुयात् । प्रतिसरबन्धहीने सौम्यं नागाधिपदैवत्यं वैष्णवान्तं हुत्वा बध्नीयात् । अङ्कुरार्पणहीने सौम्यं भूमिदैवत्यं वैष्णवान्तं हुत्वा आरभेत ।

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे उत्सवबलिपतनादिप्रायश्चित्तविधिर्नाम त्र्युत्तरशततमोऽध्यायः ॥

---

## ॥ अथ चतुरुत्तरशततमोऽध्यायः ॥

स्वेदरुधिरपुलक[3] निम्नोष्ज्वलनचलनक्षेपानतवर्णस्फुटितजल्पनहसनवल्मीकतृणकवकादिसम्भवे अङ्गहीने महाबेरे गर्भागारे अन्त्यप्रवेशने जीर्णतलभ्रंशे

---

1. B. पुनरुत्सवमारभेत । 2. B. वाद्याद्यलंकारहीनान्यतमहीने । 3. B. निम्नेषु ।

तरुणालयनिमित्तम्

गर्भभिन्न (?) सुधावर्णानुलेपने मन्दिरे [1]दुष्टे सद्यस्तरुणालयमारभेत। अज्ञानादर्थलोभाद्वा न कुर्याच्चेत् कर्तारोधकयोः ग्रामाणां च महद्भयम्। तस्मात् द्वादशाहाभ्यन्तरे अनुकूलर्क्षे वा कारयेत्। द्वादशाहेऽतीते महाशान्तिं हुत्वा वैष्णवान् संपूज्य शक्तितो दक्षिणां दत्वा आरभेत। मासेऽतीते महाशान्तिं च हुत्वा विप्रशतं भोजयित्वा देवमनुज्ञाप्य कुर्यात्। षण्मासेऽतीते भगवान् न रमेत। तस्मात् तरुणालये पूर्ववत् संस्थाप्यार्चयेत्। संवत्सरेऽतीते प्रेतावासो भवति। तस्मात्तरुणलाये देवं संस्थाप्य जीर्णबेरं विसर्जयेत् [2]।

जीर्णबेरत्यागप्रकारः

गोवालरज्जुभिः कुशरज्जुभिः ऊर्णाभिः तान्तवैः सूत्रैः वासोभिः बेरमाच्छाद्य 'पूषा ते ग्रन्थि' मिति सुदृढमाबद्ध्य गजगोवृषस्यन्दनरथरङ्गशिबिकाब्राह्मणानामन्यतममारोप्य आघोष्यालङ्कृत्य [3]समुद्रं समुद्रगां नदीं ह्रदं वा अशोष्यजलाशयमन्यं वा आश्रित्य तत्तीरे पञ्चाग्नीन् साधयित्वा दिग्देवताभ्यः पृथक् पृथक् हुत्वा सभ्ये शान्तिं हुत्वा यानस्थं [4]बिम्बं प्रणम्य 'परं रंह' इत्यादाय नावमारोप्य प्राङ्मुख उदङ्मुखो वा भूत्वा विष्णुसूक्तं जप्त्वा [5]अगाधे क्षिप्त्वा वैष्णवं हुत्वा आचार्येभ्यो धेनुचतुष्कं दद्यात्।

दारुशैलजबेराणां पतनोत्पाटनादिषु यदि न स्युः [6]व्रणादयः तान् शुचौ भूमौ खनित्वा कुशदर्भाङ्कुराण्यास्तीर्य तत्र प्रक्षिप्य त्रिरात्रेऽतीते शिलाग्रहणवद्धुत्वा महाशान्तिं हुत्वा आरभेत। प्राणाङ्गहीने चेत् अपनीयान्यमाहरेत [7]।

तरुणालयमकृत्वा नवकर्मणि कृते महत्तरो दोषो भवति। कर्तारो रौरवं यान्ति। अतः सहस्रभोजनं कृत्वा सहस्राहुतीः हुत्वा महाशान्तिं हुत्वा[8] पुनर्बालागारे संस्थाप्यारभेत। बालागारे यथावत्कृते भूमियज्ञं पुनः पुण्याहं शान्तिं च हुत्वा यथास्थानं निवेश्यारभेत। आरब्धविधिप्रमाणेनैव सर्वं कारयेत्। विधिसङ्करदोषो वर्णाश्रमसङ्कराय भवति।

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे जीर्णबेरपरित्यागविधिर्नाम चतुरुत्तरशततमोऽध्यायः [10]॥

1. क. द्दष्टे। 2. ग. इति १९१ खण्डः। 3. B. समुद्रंया। 4. ग. देव। 5. क. अस्वाते छ. अघाते। 6. छ. व्रणाः अधस्ताच्छुचौ। 7. B. आरभेत। 8. ग. तत्स्थाने बालागारे. घ. अथ बालागारे। 9. क. आरब्धं। 10. ग. इति १९३ खण्डः।

## ॥ अथ पञ्चोत्तरशततमोऽध्यायः ॥

वैष्णवशास्त्रद्वैविध्यम्

वैखानसं पाञ्चरात्रमिति विधानद्वयं विष्णोस्तन्त्रम् । वैखानसं सौम्यमाग्नेयं पाञ्चरात्रम् । तस्माद्ग्रामनगरपत्तनादिषु गृहेषु च वैखानसविधानेन भगवन्तं पूजयेत् । भुक्तिमुक्तिफलप्रदत्वात् सौम्यत्वात्तस्य । नदीतीराद्रिवनप्रदेशे विविक्तेऽपि जनेभ्योऽन्यत्र पाञ्चरात्रेणैवार्चयेत् । तान्त्रिकत्वादाग्नेयत्वात्तस्य । न कदाचिज्जनाकीर्णे समृद्धिकामः कारयेत् । कुर्याच्चेद्विनाशाय भवति ।

बैखानसविधानेनार्चिते स्थाने आग्नेयं नाचरेत् । यदि कुर्यात् भस्मसात् भवति । तद्दोषशमनार्थं महाशान्तिं हुत्वा ब्राह्मणान् परिवेष्य वास्तुशुद्धिं कृत्वा पूर्ववत् स्थापयेत् । तदाग्नेये सौम्यसंवेशः समृद्धिकरणाय भवति । तस्मात् सम्यक् समाचरेत ।

सर्वशान्तिहोमः

अनुक्तानामरिष्टानां मूलमन्त्रद्वयजपहोमैः शान्तिं कारयेत । [1]सर्ववेदमयं सर्वार्थसाधकं परात्परतरं गुह्यात् गुह्यतरम् । तस्मात्सम्यक् समाचरेत् । वरं लक्षयुक्तं मध्यममष्टसहस्रमधमं पञ्चसहस्रं तद्धोमः । तस्मात्कर्मगौरवं विदित्वा तदर्हमाचरेत् । शुचौ देशे भगवन्तं सप्तविंशतिविग्रहैराराध्य आचार्यं देववत्पूज्यारभेत । आज्येनाश्वत्थसमिद्भिः चरुणा दूर्वाङ्कुरैर्वा हृत्पद्मशिखरे जाज्वल्यमानमुकुटं देवं दिव्यभूषणं श्यामाम्बरधरं तप्तहाटकसङ्काशं रक्तास्यपाणिपादाक्षं प्रणवात्मकं शङ्खचक्रधरं परात्परं देवं विष्णुं मनसा ध्यात्वा जुहुयात् । तिलगन्धपुष्पाक्षतरत्नसंपूर्णमश्वत्थप्लक्षवटापामार्गपल्लवयुतं[2] रक्तवस्त्रवेष्टितं कलशं धान्योपरि स्थाप्य तन्मध्ये वारुणं मण्डलं [3]वारिबीजयुतं ध्यात्वा [4]प्रणवैरावेष्ट्य अनेन मन्त्रेणाभिमृश्य तज्जलेन शिष्यं सहस्रशः प्रोक्ष्य स्नानं वा कारयेत् । एतेन ग्रहदोषव्याधिपीडोपद्रवरक्तस्त्रीवल्मीका[5]द्युत्पातदुस्स्वप्नदर्शनशत्रुचोरराजभयबन्धपिशाचापस्माराद्युपद्रवाः अज्ञानदोषाः दैवकृताश्चान्ये शान्तिं यान्ति । अतः सम्यगष्टाक्षरेण द्वादशाक्षरेण वा जपेन होमेन वा कर्मगौरववशादुत्तममध्यमाधमप्रकारै-

---

1. B. सर्वदेव । 2. B. पल्लवेति नास्ति । 3. ग. वारुण । 4. प्रणवेन । 5. क. उत्पत्ति ।

रनुक्तानामाचरेत् । इदं धन्यं पुण्यवर्धनं नाभक्ताय नाशुश्रूषवे नापुत्राय नाऽशिष्याय [1] नाऽसंसक्ताय दद्यादित्याह **काश्यपः** ।

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे

**पञ्चोत्तरशततमो**ऽध्यायः [2] ॥

---

## ॥ अथ षडुत्तरशततमोऽध्यायः ॥

अथातोऽष्टाक्षरकल्पं व्याख्यास्यामः । अयं मन्त्रः साक्षाद्विष्णुमुखात् च्युतः । [3] ओङ्कारः प्रथममादिबीजं पारमात्मिकं परात्परतरं तरुणार्कवर्णं सहस्रशीर्षं सहस्राक्षं सहस्रबाहु सहस्रपादं श्रीवत्सालङ्कृतोरस्कं शङ्खासिशक्तिचक्रशार्ङ्ग पाशहलमुसलयुतं वसुप्रदं जाज्वल्यमानमुकुटं दिव्याभरणमण्डितं पद्मासनस्थितं दीर्घनादं सर्वदेवनमस्कृतं परमपुरुषाधिदैवतम् । एतन्मन्त्रं प्रमाणमिति विज्ञायते ।

अष्टाक्षरकल्पः

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे अष्टाक्षरकल्पे प्रणववर्णनं नाम

**षडुत्तरशततमो**ऽध्यायः ॥

## ॥ अथ सप्तोत्तरशततमोऽध्यायः ॥

[4] द्वितीयं मकारः पादजं रक्तवर्णं नपुंसकं त्रिशिरस्कं षड्भुजं ह्रस्वनादं ज्ञानप्रदं पाशच्छेदकरं लम्बोदरकरं बृहत्कायं स्रुवकूर्चसमायुक्तं कपिलाधिदैवतम् । [5] मकारस्तृतीयं सविसर्गमहङ्कारजं कुन्देन्दुतुहिनाकारं शान्तरूपं द्विभुजं रक्ताक्षं जटावल्कलसंवीतं रक्ताब्जमध्ये योगासनसमन्वितं दीर्घनादं बृहद्भुजं त्रिगुणं वैरिञ्चाधिदैवतम् । [6] चतुर्थं नकारः तमोजं धूम्रवर्णं चतुर्वक्त्रं चतुर्भुजं कूर्चाब्जमालासंयुक्तं स्फाटिके पीठे चासीनं वरं [7] प्रांशुनादं मुक्तिदं प्राजापत्यम् । [8] पञ्चमं रकारो वह्निशिखाकारं पुरुषरूपधरमेकवक्त्रं

अष्टाक्षरकल्पविस्तरः

---

1. B समाज्ञाय सक्ताय । 2. ग. इति १९३ खण्डः । 3. क. ओंकारं B अकारं इत आरभ्य आध्यायान्तं B कोशेषु न दृश्यते । 4. B प्रथमं । 5. B द्वितीयं । 6. B तृतीयं । 7. B प्राक्शङ्खनादं । 8. B चतुर्थ रकारः ।

श्यामाम्बरधरं द्विभुजं मूर्ध्न्यग्निशिखामूर्तैः समायुक्तं दिव्याभरणभूषितं स्वरितनाद-मग्निदमर्थदमाग्निदैवत्यम् । [1]षष्ठं यकारः प्रकृतिजं श्रीरूपसमन्वितं पद्मासनस्थमनु-दात्तनादं सुवर्णकुम्भोपमोरस्कं कर्णान्तायतलोचनमत्यन्तसुन्दरं श्वेतवस्त्रधरं द्विभुजं पद्मपुष्पधरं तप्तचामीकराभं सर्वनिधिपरिवृतं रत्नत्रययुतं दिव्यैश्वर्यप्रदं श्रिया दारिद्र्यान्धकारनाशनम् । एतत् शक्तिरित्याचार्या वदन्ति । णकारः सप्तमं क्षेत्र-ज्ञजातं गोक्षीराभं चतुर्भुजं पुंरूपं हलाब्जयुतं वसुप्रदं [2]शेषारबन्धमात्मार्पितम् (?) । अष्टमं यकारः प्राणजं रञ्जितप्रभं निष्कलं ध्यानरूपालङ्कृतं प्राणाधिदैवतं ह्रस्वनादं सर्वसिद्धिकरं पृथिवीव्याप्तम् ।

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे अष्टाक्षरकल्पे प्रणवातिरिक्त-

सप्ताक्षरवर्णनं नाम

**सप्तोत्तरशततमोऽध्यायः ॥**

---

## ॥ अथाष्टोत्तरशततमोऽध्यायः ॥

अष्टाक्षरकल्पविस्तरः

[3]एतान्यष्टाक्षराणि । रूपं पूर्वमेवोक्तम् । विद्यमानाशरीरगतिर्यस्य स देवो नारायणः परमात्मेत्यर्थः । [4]इदं पारमात्मिकमिति केचिद्वदन्ति । सर्वसिद्धिकरमिति भृग्वादयः । श्रुतिप्रमाणमिति द्वैपायनः । सिद्धि-करमिति विद्याधाराः । मङ्गल्यकरमिति नागाः । श्रीकरमिति मनुष्याः । मन्त्राधि-दैवतं परमात्मा । छन्दोगायत्रम् । सांकृत्यायनः ऋषिः । ब्रह्म स्वयमेव पञ्चा-ङ्गानि । पूर्वोक्तगुणमाश्रित्य यथाबलं शुश्रूषां कृत्वा शक्तितो दक्षिणां दद्यात् । अनुमान्य विष्णुं भक्तिं समाविश्य निश्चलो भूत्वा प्रणवान्वितं ज्ञात्वा यथाविधि जपमारभेत । न स्त्रियै शूद्रायानुपेतायाशिष्याय नासंवत्सरोषिताय मन्त्रं दद्यात् । [5]अन्यथा दीयमानस्य निष्फलं भवति । तस्मात् सम्यक् दीक्षेत । एवं ज्ञात्वा अन्यत्कर्म विहाय दृढमनस्को भूत्वा पूर्ववत्पञ्चाङ्गन्यासं कृत्वा स्वशरीरे अष्टाक्ष-

---

1. B. पञ्चमं छ. अकारं पञ्चमं । 2. B. शेषारिबन्धमात्मारितं । 3. तेषामष्टा-क्षराणां रूप । 4. B. अयं पारमात्मिकः। 5. अन्यथा यदि विनश्यति निष्फलं भवति ।

राणि विन्यसेत् । न्यासः त्रिविधो भवति । सृष्टिः स्थितिः संहृतिश्चेति । मूर्ध्नि प्रणवं विन्यस्य पश्चाल्ललाटनयनघ्राणजिह्वाहृदयनाभिगुह्यचरणान्तरेषु यथाक्रमेण अष्टाक्षराणि न्यस्य सृष्टिन्यासः । पादे प्रणवं विन्यस्यैतद्विपरीतं क्रमेण ज्ञात्वा पादादिललाटान्तं विन्यस्य पुनः प्रणवं मूर्ध्नि विन्यसेदेष संहृतिन्यासः । जठरे प्रथमं विन्यस्य द्वितीयं पादयोः तृतीयं बाह्वोः चतुर्थं हृदये पञ्चमं नयनयोः षष्ठं शिरसि सप्तमं वक्त्रे अष्टमं कर्णे आद्यन्तप्रणवयुतं क्रमेणाष्टाक्षराणि विन्यस्य स्थितिन्यास इति विज्ञायते ।

इति श्रीवैखानसे काश्यपप्रोक्ते ज्ञानकाण्डे अष्टाक्षरकल्पे न्यासत्रयविधानं नाम

अष्टोत्तरशततमोऽध्यायः ॥

ग्रन्थश्च समाप्तः ॥

---

श्री विखनसे परब्रह्मणे नमः.

भृगुमरीच्यत्रिकाश्यपेभ्यो भगवच्छास्त्रसंहितानिर्मातृभ्यः परमर्षिभ्यो नमः.

श्रीश्रीनिवासमखिवेदान्तगुरवे नमः ॥

॥ ओम् ॥



श्रीः

# शुद्धपाठ सूची.



| पुटे. | पंक्तौ. | स्खलितम्. | शुद्धपाठः |
|---|---|---|---|
| २. | १९. | तदचनं | तदर्चनं |
| ३. | २३. | वर्षाश्रति | वर्षाश्रेति |
| ५. | ५. | उशीरलालवंग | उशीरैलालवंग |
| ५. | १३. | पञ्चवणयुतं | पञ्चवर्णयुतं |
| ९. | ६. | दुद्विशत | द्विशत |
| १०. | ७. | विद्युद्रूपां | विद्यूद्रूपां |
| | ११. | ... | काश्यपः |
| ११. | २. | अद्भुतंशन्ति | अद्भुतशान्ति |
| | १४. | पत्रिकाभादि | पत्रशाखादि |
| | १५. | तद्भूमिकाशां | तद्भूमिकानां |
| | १९. | परिवेष्ष्य | परिवेप्प्य |
| | २२. | जपन्नेषु | जङ्गमेषु |
| १२. | २. | अजाग्नौ | अब्जाग्नौ |
| | ८. | संहितायां | संहितायाः |
| | ९. | मिन्द्राहुल्या | मिन्दाहुल्या |
| | १०. | पारमात्मककारादि | पारमात्मिकर्मीकारादि |
| | २१. | ब्रहद्रथ | बृहद्रथ |
| १३. | २. | घनागुरु | घनगुल |
| १४. | ८. | सवकर्माणि | सर्वकर्माणि |
| | ९. | गृह्यभूमिः | ग्राह्यभूमिः |
| | १५. | विष्ण्वाक्रान्त | विष्णुक्रान्त |
| | | द्विजार्विनृपाढ्याधारकं | द्विजर्षिनृपाढ्यं |
| | १९. | सुरघ्नि | सुरघ्नी |
| | २४. | रुद्र | शूद्र |
| | २८. | सुखविहसैं | सुखविहीनैः |
| १५. | १. | विवर्जितैकं | विवर्जितं |
| | ४. | जालिक | जालिका |
| | ५. | जलवर्ण | वलवर्ग |
| | ६. | . | हरितवर्णपिप्पलींरसं |
| | ७. | दमकल | दमलक |
| | ९. | पथसंयुक्तं | पण्यसंयुक्तं |
| | | — | मनाक्लावण्यपण्यसंयुक्तं |
| | १५. | पाणिनाभि | प्राणिभिः |
| | १७. | पत्रिकासन्दापाषण्डरोमक | पत्रकण्टकपाषण्डकुहक |
| | १८. | ... | हरीतकगन्धमसिताश्रितातिरक्ताभं |
| १५. | २०. | काण्डकर्म | काण्डतिग्म |
| | २१. | लालाभाव | लालाभाव |
| १६. | १. | चिबुक | चिंचुल |
| | | ... | गुलगन्धाढ्यं |
| | ४. | सोमघ्नि | सोमघ्नी |
| | ६. | ... | सरोगं क्षोभकर |
| | ८. | एतत् | एवं तत् |
| | | संज्ञानां | संज्ञाकानां |

| पुटे. | पङ्क्तौ. | स्खलितम्. | शुद्धपाठः |
| --- | --- | --- | --- |
| | | अन्यषट्के | आद्यषट्के |
| | | तेष्वेभ्यो | तेष्वाद्यौ |
| | २२. | ... | मन्त्रीन्द्वर्के |
| | २७. | ... | सुरासुरमित्राणां |
| १७. | १७. | वामाद्दक्षिणगा. | वामाद्दक्षिणगाः |
| | १९. | ह्रस्व | हृस्व |
| १९. | २२. | प्राचीयामुदीचीं | प्राचीमुदीचीं |
| २०. | १९. | राजन्तराख्य | राजान्तराख्या |
| २१. | ९. | यथेष्ठ | यथेष्ट |
| | १८. | भागभ्यान्तरं | भागाभ्यन्तरं |
| २२. | १६. | संस्थाप्योङ्कारेण | संस्थाप्य ओङ्का-रेण |
| २५. | ६. | ... | गुणास्सर्वे |
| २६. | १०. | ... | सुरविप्रक्षेत्रं |
| २७. | १८. | आग्नेयादिषु | आग्नेयादिषु |
| २८. | ३. | सुग्रीवे | सुग्रोवे |
| | ९. | प्राकर | प्राकार |
| | १५. | अनियुक्तानां | नियुक्तानां |
| २९. | ९. | ... | सम्पत् |
| ३२. | १२. | ... | तामिस्त्रार्थ |
| ३३. | २२. | ... | समावाह्य |
| ३५. | २. | ... | अपूपौदनैः |
| ४१. | १२. | ... | दृढतरमूलान् |
| ४२. | १७. | .. | घृतपूर्णपात्रम् |
| ४३. | १८. | अग्नेय्यां | आग्नेय्यां |
| | २०, २१ | ... | सदृशी |
| ४४. | १, ३, ९ | ... | सदृशी |
| ४८. | २२. | ... | मरतकवैदूर्य |
| ५७. | ११. | हस्तभ्यां | हस्ताभ्यां |

| पुटे. | पङ्क्तौ. | स्खलितम्. | शुद्धपाठः |
| --- | --- | --- | --- |
| | १७. | अगर | अगार |
| ५५. | १९. | .. | स्थितदक्षिण |
| | २४. | ... | श्रीदाम्ना |
| ५६. | १६. | ... | पृथुतर |
| ५७. | १३. | स्थपितायां | स्थापितायां |
| ५९. | १९. | ... | पादादृष्ट |
| ६३. | १८. | . | स्फटिकैः |
| ६६. | १२. | .. | अश्वत्थादि |
| ६७. | १७. | निर्मिक | निर्मोक |
| ६९. | ७. | ... | मेदिनीद्वीति-पङ्क्तिभिः समा |
| ७०. | ७. | ... | भूपादं |
| ७१. | ४. | ... | गृहशय्यासन |
| ७३. | ८. | उत्सेघ... | उत्सेधं |
| | १०. | अध्यर्थी .. | अध्यर्धयवं |
| | ११. | ... | गोष्ठ्यायाम |
| | १७. | त्रयवाभिकं | त्रियवाभिकं |
| | २१. | . . | कर्णाङ्घ्रिक्रान्तर |
| ७४ | २. | भानं .. | भागं |
| | | मेद्रायामं | मेढ्रायामं |
| | २०. | ... | भूषणादीनां |
| ७५. | १० | ... | अर्घ्याङ्गुल |
| ७६. | ८. | सर्वेश्च ... | सर्वैश्च |
| | १६. | किष्किन्धर | किष्किन्ध |
| | २३. | शयनं .. | शयानं |
| ७८. | ३. | ... | प्रतिष्ठायां |
| | १२. | ... | सत्क्रियां |
| ७९. | १४. | चोत्मा. . | चोत्तमाः |
| | १६. | नाप्ररं ... | नापरं |

| पुटे. | पंक्तौ. | स्खलितम्. | शुद्धपाठः |
|---|---|---|---|
| ८०. | १४. | षरिस्तीर्य | परिस्तीर्य |
| ८१. | १०. | एव ... | एवं |
| ८५. | ११ | ... | आभरणाद्यै-रलङ्कृत्य |
| ८६. | १२. | अस्तीर्य | आस्तीर्य |
| ९०. | १५. | ... | यज्ञदैवतं |
| | १७. | ... | आवसत्थ्य |
| ९२. | ५. | ... | त्यक्त्वान्यदादाय |
| | १८. | ... | तत्तद्द्रव्यैः |
| ९५. | २. | ... | तद्भूर्भूस्थं |
| | १०. | ... | सत्त्वेव |
| ९६. | २. | ... | तस्थुषः |
| | ११. | ... | महाधिपति. |
| १००. | १९. | सर्वाणी | सर्वाणि |
| | २१. | अनास्तिकः | न नास्तिकः |
| १०१. | १. | अविंच्छिन्नं | अविच्छिन्नं |
| १०२. | ४. | ... | चतुर्वेदादि |
| | ११. | उँद्रकुम्यं | उदकुम्भं |
| १०४. | १४. | ... | अर्घ्यपात्राणि |
| | २०. | ... | अर्घ्यं |
| १०५. | २. | ... | मित्रःसुपर्णः |
| | १७. | ... | इदं विष्णुरिति |
| १०६. | ३. | ... | भुवङ्गपञ्चभागं |
| | ५. | ... | भित्त्युन्नतं |
| | ९. | ... | घृतमाम्नाय्य |
| १०७. | २. | विततंधन | विततघन |
| | १०. | ... | प्रक्षिप्य |
| | १५. | प्रतः | आप्रातः |
| १०८. | २१. | सूर्या | सूर्यं |
| ११०. | ३. | अर्घ्ये | अर्घ्यं |
| | १४. | संव्यशेत् | सन्न्यसेत् |
| | | ... | कोष्ठादीन् |
| | १८. | ... | उच्छ्रयाः |
| १११. | ६. | थूप | धूप |
| | ८. | षक्वानि | पक्वानि |
| ११२. | १०. | ... | सर्वे |
| | १३. | .. | तिष्ठेत् |
| ११५. | २. | शल्रुषं | शैल्रषं |
| | ११. | ... | एकदंष्ट्रं |
| | १३. | .. | अत्युच्छ्रितं |
| | २२. | .. | कार्मुकं |
| | २४. | ... | अर्चनायां |
| ११६. | २३. | मुद्गासारं | मुद्गसारं |
| ११७. | ९. | .. | लोहपात्रे |
| | २१. | | ऊर्ध्वपुण्ड्रं |
| | २५. | ... | मुख्यहवि |
| १२०. | १८. | .. | इन्द्रादीनां |
| १२१. | ८. | .. | व्याख्यास्य |
| | १०. | ... | धर्मं |
| | | ... | मूर्तेरेव |
| १२२. | ९९. | . | उत्फुल्ल |
| १२३. | ६. | ... | स्थापयेच्च |
| | १६. | ... | अभिमुखं |
| १२४. | २३. | ... | जुहुयुः |
| १२५. | ६. | ... | पुरुष |
| | १०. | .. | प्रभं |

| पुटे. | पङ्क्तौ. | स्खलितम्. | शुद्धपाठः |
|---|---|---|---|
| १२५ | १७. | ... | अग्निवर्णं |
| | १९. | ... | वामेऽर्चयेत् |
| | २०. | ... | सत्यं |
| | २१. | ... | पौष्णीं |
| १२७. | १०. | ... | राघवराम: |
| १२८. | ४. | ... | प्रतिष्ठाकाम: |
| १३२. | १७. | ... | श्वेताभां |
| | २१. | ... | उदकादानपरं |
| १३४. | ११. | ... | स्वाम्बराव कुण्ठ-नपरं |
| | १५. | ... | प्रसार्य |
| १४०. | १७. | ... | वस्त्रेण |
| १४१. | २१. | ... | समृद्धिनीं |
| | २२. | ... | कामनन्दामिति |
| १४२. | १५. | ... | एकादशाधिपान् |
| १४३. | २०. | ... | निर्माल्यमपोह्य |
| १४५. | १४. | मिश्र | मिश्रं |
| १४७. | १५. | ... | ध्वजाग्रं |
| १५१. | १०. | ... | गतास्ते |
| १५२. | २. | आमन्त्रकं | अमन्त्रकं |
| | १७. | विलोकिता | विलोकितवदनानि |
| १५३. | २१. | ... | तच्छेषभवेन |
| १५७. | १३. | ... | उपशामनार्थं |
| १५८. | १०. | ... | त्रिणवति |
| १६१. | ६. | ... | ध्रुवस्य |
| १६६. | ६. | | नाम्न्या आसीद्वे-द्वाहमिति स्यात् - प्रक्रमात् |
| १६८. | १६. | ... | संस्नाप्य |
| १६९. | ३. | ... | सन्व्यधिप |
| १७१. | ८. | . | अलङ्कृत |

❀ सार्धमितिस्थाने सार्धं

❀ यावदुपलब्धि संगृहीता.

॥ ओम् ॥

—

Printed at Tirumalai-Tirupati Devasthanams-Press, Tirupati and publishe by the Director. Sri Venkateswara Oriental Institute.